विनापि व्यावर्तकं धर्मं परेषां विशेषाणामिव नित्यानां द्रव्याणामपि स्वत एव व्यावर्तकत्वा-त्(१)। योगिनोऽतिरिक्तं विशेषमीक्षन्ते(२)। एवं तर्हि त एव सशपथं पृच्छन्तां किमेते ऽतिरिक्तं

---

त्वादिकमादाय सिद्धसाधनवारणाय परस्परासमवेतेति। एकत्वादिकमादाय सिद्धसाधनवारणाय समवेतशून्येति। प्रमेयत्वादिकमादाय तद्वारणाय समवायीति। अभावे व्यभिचारवारणाय हेतौ समवायित्वे सतीति। घटपट-समवायित्वविशिष्टाया अभावव्यावृत्तेः कपालतन्त्वादौ सत्त्वेन हेतुसत्त्वात् साध्यासत्त्वेन व्यभिचारः स्यादतो हेतौ समवायीति। तथा च तादृशव्याप्तिबलात् सजा-तीयनित्यद्रव्ययोः परस्परासमवेतसमवेतशून्यधर्मसिद्धौ अर्थादतिरिक्तविशेषसिद्धिरत आह। विनापीति। व्यावर्तकं धर्ममिति। समवायेन व्यावर्तकं धर्ममि-त्यर्थः। परेषाम्। अतिरिक्तविशेषस्वीकर्तृणाम्। स्वत एवेति। तादात्म्येनैवेत्यर्थः। व्यावर्तकत्वादिति। परस्परव्यावृत्तिबुद्धिजननादित्यर्थः। तथा चोपदर्शितव्या-प्तेरप्रयोजकतया शशविषाणतुल्यैव तर्करसिकानामिति भावः। नन्वतिरिक्तविशेषसिद्धिर्योगिनां प्रत्यक्षबलादि-त्याशङ्कते। योगिन इति। काका समाधानं क्रियते। एवं तर्हीति। तथा च तेषां तद्विषयकप्रत्यक्षे मानाभा-

---

(१) व्यावृत्तत्वात्-पा० १। २। ३ पु०।
(२) प्रत्यक्षत एवेति चेत्-इत्यधिकम् ३ पु०।

विशेषमीक्षन्ते न वेति ॥

रूपादिकं चाव्याप्यवृत्त्यपि सविषयावृत्ते-र्व्याप्यवृत्तिवृत्तिजातेरव्याप्यवृत्तिवृत्तिताविरोध-स्तु निष्प्रामाणिकः। पक्के च घटे रक्तप्रतीतिर्ना-प्रमा बाधकाभावात्। उपलभ्यते च भग्ने तस्मि-न्नन्तःश्यामत्वम्। स्मृतिरपि।

लोहितो यस्तु वर्णेन मुखे पुच्छे तु पाण्डुरः।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते॥ इति

---

भावादिति भावः।

रूपादेरव्याप्यवृत्तित्वं व्यवस्थापयति। रूपादिक-मिति। ननु रूपादेरव्याप्यवृत्तित्वाङ्गीकारे सविषयावृ-त्तिव्याप्यवृत्तिवृत्तिजातेरव्याप्यवृत्तिवृत्तित्वाभावनियम-भङ्गप्रसङ्ग इत्यत आह। सविषयावृत्तेरित्यादि। तथा च प्रमाणाभावेन तादृशव्याप्तेरभावात् न कोपि दोष इति भावः। ननु तथापि रूपादेरव्याप्यवृत्तित्वे प्रमाणाभाव इत्यत आह। पक्के ऽपीत्यादि। श्यामत्वं नीलरूपम्। तथा चैकस्मिन्नधिकरणे उपलभ्यमानयोरेककालावच्छेदेन विरुद्धयोः रक्तनीलयोरवच्छेदकभेदं विना अनुपपन्नतया अवच्छेदककल्पनस्यावश्यकतया किमवशिष्टमव्याप्यवृ-त्तित्वे इति भावः।

रूपादेरव्याप्यवृत्तितायां लौकिकप्रमाणमुक्त्वा स्मृति-रूपशब्दप्रमाणमप्याह। लोहित इत्यादि।

चित्रमपि नातिरिक्तं रूपं समानाधिकरणविजातीयरूपसमुदायादेव तथाविधव्यवहारोपपत्तेः नीलादेर्नीलाद्यतिरिक्तरूपाजनकत्वाच्च ॥

नानाजातीयरूपवदवयवारब्धघटादौ अतिरिक्तचित्ररूपवादिनां प्राचां मतं दूषयति । चित्रमपीति । ननु अतिरिक्तचित्ररूपानङ्गीकारे चित्रं रूपमिति प्रतीतेः का गतिरित्यत आह । समानाधिकरणेत्यादि । विजातीयरूपसमुदायात् अव्याप्यवृत्तिनीलपीतादिसमूहादित्यर्थः । तथाविधव्यवहारोपपत्तेः । चित्रमिति प्रतीत्युपपत्तेरित्यर्थः । ननु चित्रमिति प्रतीतीनां सर्वत्र नानारूपविषयकत्वकल्पने गौरवात् तदपहाय लाघवादतिरिक्तैकचित्रविषयकत्वकल्पनाया एवोचितत्वादिति तादृशप्रतीतिविषयतयातिरिक्तचित्ररूपसिद्धिरप्रत्यूहैवेत्यत आह । नीलादेरित्यादि । नीलादेर्नीलाद्यतिरिक्तरूपाजनकत्वनियमाच्चेत्यर्थः । तथा चातिरिक्तचित्ररूपस्वीकारे तादृशनियमभङ्ग इति नानाजातीयरूपवदवयवारब्धे घटादौ अव्याप्यवृत्तिनानारूपस्वीकार एवोचित इति भावः ।

अत्र प्राचीनमतानुयायिनः । दर्शितनियमस्याप्रयोजकतया नातिरिक्तचित्रे किञ्चिद्बाधकम् । न च चित्ररूपाङ्गीकारे नीलघटादौ चित्रापत्तिवारणाय चित्रत्वावच्छिन्नं प्रति नीलादिषडभावानां स्वाश्रयसमवेतत्वप्रत्यासत्त्या अनेकहेतुत्वकल्पने गौरवमिति वाच्यम् । तत्राव्याप्यवृत्तिनानाजातीयरूपाङ्गीकर्तृमतेऽपि नीलाद्यवयवावच्छेदेन पीताद्यापत्तिवारणाय अवच्छेदकतासम्बन्धेन नीलादिकं

प्रति समवायसम्बन्धेन नीलत्वादेर्हेतुत्वकल्पनायाः सा-म्यात्। ननु तथापि कारणतावच्छेदकसम्बन्धादिगौरवा-शङ्काकलङ्कितं चित्ररूपवादिमतमिति चेद्भ्रान्तोऽसि। न हि वयमुपदर्शितप्रत्यासत्त्या नीलाभाववत्वादिना हेतुत्वं चित्रत्वावच्छिन्नं प्रति कल्पयामः येन गौरवावकाशः किं तु स्ववृत्तिप्रागभावप्रतियोगित्वस्वाश्रयसमवेतसमवेतत्व-कालिकविशेषणतैतत्त्रितयसम्बन्धेन रूपविशिष्टचित्ररूपं प्रति स्वसामानाधिकरण्यविशिष्टस्वनिष्ठभेदप्रतियोगिता-वच्छेदकजातिचित्रत्वान्यतराश्रयसमवायिसमवेतत्वस-म्बन्धेन रूपत्वेन हेतुत्वं तत्र नाव्याप्यवृत्तिनानारूपमता-पेक्षया गौरवावकाशः। तन्मते उपदर्शितरीत्या नीलादीनां षट्कार्यकारणभावकल्पनाधिक्यात्। यदि चात्रापि स्वप-दार्थपर्यालोचनक्रमेण किञ्चिद्दोषमुद्भावयसि तथापि चित्ररूपवादिमतमेव समीचीनम्। यथाहि विजातीय-नानारूपवदवयवारब्धे घटादौ अव्याप्यवृत्तिनानाजाती-यरूपाङ्गीकारे नीलावयवावच्छेदेन पीतादिवारणायावच्छे-दकतासम्बन्धेन पीतादिकं प्रति समवायादिना पीतादीनां षट्कार्यकारणभावकल्पने गौरवम्। चित्र-रूपवादिमते तु सर्वनीलादिस्थले चित्रापत्तिवारणाय चित्रत्वावच्छिन्नं प्रति कार्यकालवृत्तितया चित्रेतर-रूपाभाववत्वेनैकहेतुत्वकल्पने स्फुटमेव लाघवम्। तथा च लाघवतर्कोपोद्बलकप्रमाणसिद्धचित्ररूपनिराकरणं गीर्वा-णगुरुणाप्यशक्यमित्यवेहि। न च चित्ररूपवादिमते चित्र-घटे नीलाद्यापत्तिवारणाय विजातीयनीलादिकं प्रति नी-लाभावादेः स्वाश्रयसमवेतत्वप्रत्यासत्त्या प्रतिबन्धकत्व-कल्पने गौरवमिति वाच्यम्। तस्योत्तरकालिकत्वेन

स्पर्शोऽपि चाव्याप्यवृत्तिः । अन्यथा सुकुमारकठिनाभ्यामवयवाभ्यामारब्धे ऽवयविनि सुकुमारावच्छेदेन[१] त्वक्संयोगे काठिन्यस्याप्युपलम्भप्रसङ्गः[२] । न च सुकुमारत्वकठिनत्वे संयोगविशेषौ चाक्षुषत्वप्रसङ्गात् ॥

फलमुखतयाऽदोषत्वात् । एवमेतादृशरीत्या चित्रस्पर्शादिकमपि आत्मलाभपदवीं विदधातीत्युक्तमधिकं चित्ररूपविचारे ऽनुसन्धेयमिति सङ्क्षेपः ॥

स्पर्शोऽपि चेति । सुकुमारकठिनस्पर्शवदवयवारब्धे ऽवयविनीत्यादिः । ननु व्याप्यवृत्तय एव स्पर्शास्तत्र किमिति नाङ्गीक्रियन्ते इत्यत आह । अन्यथेति । तत्र व्याप्यवृत्तिनानास्पर्शाङ्गीकारे इत्यर्थः । सुकुमारावच्छेदेनेत्यादि । न चाव्याप्यवृत्तिस्पर्शाङ्गीकारे ऽप्येष दोष इति वाच्यम् । सामान्यतोऽव्याप्यवृत्तिस्पार्शनत्वावच्छिन्नं प्रति स्वावच्छेदकावच्छेद्यत्वसम्बन्धेन त्वक्संयोगस्य हेतुत्वकल्पनात् । न च व्याप्यवृत्तित्ववादिनापि कठिनस्पर्शादिस्पार्शनत्वावच्छिन्नं प्रति कठिनस्पर्शादिमदवयवावच्छेदेन त्वक्संयुक्तसमवायत्वेन हेतुत्वकल्पनात् नानुपपत्तिरिति वाच्यम् । तथा सति गौरवप्रसङ्गादिति भावः । ननु सर्वमिदं सुकुमारकठिनभेदेन पृथिव्याः स्पर्शद्वैविध्ये तदेव तु दुर्लभं सुकुमारत्वकठिनत्वादेः संयोगवृत्तिजातित्वादित्याशङ्क्य निषेधति ।

(१) सुकुमारावयवावच्छेदेन-पा० २ पु० ।
(२) उपलब्धिप्रसङ्गः-पा० ३ पु० ।

रसोऽपि चाव्याप्यवृत्तिः। अन्यथा तिक्तमधुराभ्या[1]मारब्धे ऽवयविनि तिक्तावयवावच्छेदेन रसनायोगे[2] माधुर्योपलम्भप्रसङ्गः। नीरस एव वा तत्रावयवी॥

नचेति। संयोगविशेषाविति। आरम्भकसंयोगवृत्तिजातिविशेषावित्यर्थः।

रसोपि चेति। तिक्तमधुरादिनानारसवदवयवारब्धे घटादावित्यादिः। तत्राव्याप्यवृत्तिरसाङ्गीकारे बाधकमाह। अन्यथेति। अर्थस्तु पूर्ववत्। ननु नानाजातीयरसवदवयवारब्धे ऽव्याप्यवृत्तिनानारसाङ्गीकारो निरर्थकः न च तत्र तथानभ्युपगमे रससाक्षात्कारानुपपत्तिः। चित्ररसमादाय तदुपपत्तेः। न च यत्र द्व्यणुकपर्यन्तं चित्ररसादिस्वीकारस्य गौरवदोषग्रासेन नीरसत्व एव पर्यवसानादिति वाच्यम् तत्रावयवगतरसमादाय तदुपपत्तेः। न च यत्र द्व्यणुकपर्यन्तं नीरसस्तत्र कागतिरिति वाच्यम्। तत्र रसांशे उपनीतभानात्मकपरमाणुगतरसविषयकप्रत्यक्षस्यैवाङ्गीकारादिति मनसि कृत्वाह। नीरस एवेति। तत्रेति। नानारसवदवयवारब्धे ऽवयविनीत्यर्थः। ननु तत्र रसोत्पत्तौ बाधकाभावोऽवयवरसरूपकारणसत्त्वादिति चेन्न। रसत्वावच्छिन्नं प्रति स्वसामानाधिकरण्यविशिष्टस्वविजातीयरससामानाधिकरण्यसम्बन्धेन रसत्वेन प्रतिबन्धकत्वकल्पनादिति भावः। इदं त्वापाततः।

(१) मवयवाभ्याम्-इत्यधिकं क्वचित्।

(२) रसनसंयोगे-पा॰ २ पु॰।

एतेन गन्धो व्याख्यातः ॥

कर्मापि चाव्याप्यवृत्ति । चलन्तीषु सर्वासु शाखासु निश्चलमूले वृक्षे[1] चलतीतिप्रत्ययात् । शाखा एव परं चलन्ति न पुनर्वृक्ष इत्यपि प्रत्ययोऽस्तीति चेत् तस्य सर्वावयवावच्छेदेन चलनाभावो विषयो न पुनः सर्वथैव चलनाभावः उक्तप्रत्य-

तत्र चित्ररसस्वीकारयुक्तेरुक्तत्वादिति ध्येयम् ॥

एतेनेति । दर्शितक्रमेणेत्यर्थः । गन्धो व्याख्यात इति । नानाजातीयगन्धवदवयवारब्धेऽवयविनि अव्याप्यवृत्तित्वेन गन्धो व्याख्यात इत्यर्थः । इदमुपलक्षणम् । तत्रावयवी निर्गन्धो वेत्यपि द्रष्टव्यम् ॥

चलतीतिप्रत्ययादिति । तथा च कर्मणोऽव्याप्यवृत्तित्वाङ्गीकारे तत्र तथाविधप्रतीत्यनुपपत्त्या तदव्याप्यवृत्तित्वाङ्गीकार आवश्यक इति भावः । ननु तत्र शाखा एव चलन्ति न वृक्ष इतिबाधकप्रतीतिसत्त्वाच्चलतीति प्रत्ययो भ्रम एवेत्यभिप्रेत्याशङ्कते । शाखा एवेति । इत्यपीति बाधक इति शेषः । तस्य चेति । शाखा एवेत्यादिना दर्शितप्रत्ययस्येत्यर्थः । सर्वावच्छेदेनेति । सर्वावयवावच्छेदेनेत्यर्थः । सर्वथैवेति । सर्वावयवानामवच्छेदकत्वावगाहनं विनेत्यर्थः । उक्तप्र-

(१) मह्यीरुहे-पा॰ २ पु॰ ।

यविरोधात् । अत एव सदा सकम्पोऽश्वत्थ इति प्रसिद्धिरपि । सर्वैश्च नीलैरारब्धे ऽवयविनि नीलान्नीलं स्वस्वावच्छेदेनोत्पद्यमानमविरोधाल्लाघवमेवोत्पद्यते सजातीयविजातीयेषु नानापदार्थेषु जायमानं समूहालम्बनरूपमिवैकं ज्ञानम् ॥

एकत्वं च न स्वासमवायिकारणकम् अस(१)-

त्यविरोधादिति । तथाविधवृक्षे चलतीति प्रत्ययरूपप्रतिबन्धकसत्त्वादित्यर्थः । तथा च तयोः परस्परविरोधेनाप्रामाण्यापत्त्या विषयव्यवस्थया प्रामाण्याभ्युपगम एवोचित इति भावः । अत एव कर्मणो ऽव्याप्यवृत्तित्वादेवेत्यर्थः । ननु भवत्प्रदर्शितरीत्या कर्मणोऽव्याप्यवृत्तित्वं रूपादेरव्याप्यवृत्तित्वं तु प्रतिकूलतर्कग्रस्तत्वाद्धेयमेव । तथाहि नानारूपवदवयवारब्धे घटे ऽव्याप्यवृत्ति-नानारूपवत्सर्वनीलावयवारब्धे ऽपि घटे स्वस्वावच्छेदेन नानानीलोत्पादप्रसङ्गोवच्छेदकतासम्बन्धेन नीलजनकस्य नीलस्य तत्र सर्वावयवावच्छेदेन सत्त्वादित्यत आह । सर्वैश्चेत्यादि । स्वस्वावच्छेदेनेत्यनेन व्याप्यवृत्तेरप्यवच्छेदकत्वमङ्गीक्रियत एवेति ध्वनितम् । तथा च तत्र लाघवादेकमेव नीलमङ्गीक्रियत इति भावः ।

अवयव्येकत्वं प्रति अवयवैकत्वहेतुतां खण्डयति । एकत्वं चेति । एकत्वमित्युपलक्षणम् द्वित्वादिकमपि न

(१) स्वासमवायिकारणकम् स्वाम—पा० क्वचित् ।

समवायिकारणत्वेन कारणत्वाभावात् भावकार्यमात्रस्यासमवायिकारणजन्यत्वे मानाभावात् । द्रव्यनाशे च सर्वत्रासमवायिकारणनाश एव कारणम् नित्यसमवेतद्रव्यनाशे क्लृप्तत्वात् ॥

सासमवायिकारणकमित्यपि बोध्यम् । न च द्वित्यादिकं प्रति एकत्वद्वित्वादेरसमवायिकारणत्वाभावे घटद्वय एव द्वित्वमुत्पद्यते न त्रिष्वित्यत्र नियामकाभाव इति वाच्यम् । तत्र समवायिकारणद्वयस्यैव विशेषतो नियामकत्वसम्भवात् । न च तत्र समवायिकारणद्वयस्य विशेषतो हेतुत्वकल्पने तत्रैकत्वद्वयहेतुताकल्पनमादाय विनिगमनाविरह इति वाच्यम् । तत्तत्समवायिकारणसमवेतरूपादीनां व्यक्तिस्थानीयापत्तिवारणाय तत्तद्व्यक्तिसमवेतं प्रति तत्तद्व्यक्तित्वेन हेतुत्वकल्पनाया आवश्यकत्वस्यैव विनिगमकत्वादिति भावः । असमवायिकारणत्वेनेति । आत्माश्रयदोषेणेति शेषः । ननु मास्त्वसमवायिकारणत्वेन कारणत्वं तथापि भावकार्यस्य सासमवायिकारणत्वनियमेनावयव्येकत्वं प्रति स्वाश्रयसमवेतत्वसम्बन्धेनावयवैकत्वादिना ऽसमवायिकारणत्वमावश्यकमित्यत आह । भावकार्यस्येति । तथा चाप्रयोजकत्वात् उपदर्शितनियम उपेक्षणीय इति भावः । द्रव्यनाशं प्रति असमवायिकारणनाश एव सर्वत्र कारणं न तु समवायिकारणनाश इति व्युत्पादयति । द्रव्यनाशेति । असमवायिकारणनाश एवेत्येवकारेण समवायिकारणनाशस्य हेतुत्वव्यवच्छेदः । ननु विनिगमनाविरहेण समवायिकारणनाश-

स्यापि तत्र हेतुत्वमावश्यकमित्यत आह । नित्यसमवेतेत्यादि । तथा च द्व्यणुकनाशानुरोधेन द्रव्यनाशं प्रति असमवायिकारणनाशस्य हेतुताया आवश्यकत्वस्यैव विनिगमकत्वादिति भावः ॥

अत्र प्राचीनानुयायिनः । स्वातन्त्र्येण चेद्द्रव्यनाशं प्रति समवायिकारणनाशस्य हेतुता कल्प्यते तदैव प्राचीनमते गौरवावकाशः । तदेव न किं तु कपालादिसमवेतरूपादिनाशानुरोधेनावश्यकतया कपालादिसमवेतनाशं प्रति कपालादिनाशहेतुतयैवोपपत्तेः । तथाहि कपालादिनाशस्य कार्यतावच्छेदकं न तत्तद्रूपनाशत्वादिकं गौरवात् किं तु कपालसमवेतनाशत्वं तच्च घटनाशसाधारणमिति कपालादिनाशात् घटनाशोत्पत्तौ बाधकाभावः । अथ कपालादिनाशस्य कार्यतावच्छेदकं न कपालादिसमवेतनाशत्वम् अग्निसंयोगनाश्यकपालादि(१) समवेतरूपनाशे व्यभिचारात् । नाप्यग्निसंयोगजन्यकपालादिसमवेतनाशत्वं तथा उत्तरसंयोगजन्यकपालादिक्रियानाशे व्यभिचारात् । उत्तरत्वस्य दुर्वचतया तद्भेदस्य तत्र निवेशासम्भवात् । संयोगत्वेनानुगतीकृतयोरुत्तरसंयोगाग्निसंयोगयोरजन्यत्वनिवेशस्तु सुदूरपराहतः । कालोपाधिविधया संयोगादिजन्यस्य कपालादिनाशजन्यकपालादिसमवेतनाशस्यासंग्रहप्रसङ्गात् । तथा चानायत्या तत्तद्रूपविनाशं प्रति कपालादिनाशत्वेनैव हेतुता कल्पनीया । तथा च न समवायिकारणनाशाद् द्रव्यनाशसम्भव इति तदनुरोधेनातिरिक्तकार्यकारणभाव आवश्यक इति चेत् न स्वप्रतियोगिसमवेतत्वका-

(१) अग्निसंयोगजन्यकपालादि-पा २ पु० ।

## द्रव्यस्पार्शनप्रत्यक्षे स्पर्शवत्त्वमेव प्रयोजकम् ।

लिकविशेषणतोभयसम्बन्धेन नाशवान् यस्तद्वृत्तिप्रतियोगितासम्बन्धेन नाशत्वावच्छिन्नं प्रति स्वप्रतियोगिसमवेतत्वसम्बन्धेन कपालादिनाशत्वेन हेतुतायाः क्लृप्तत्वात् तत्र च नोपदर्शितानुपपत्तिः । पाकादिजन्यरूपादिनाशस्य तथाविधप्रतियोगितासम्बन्धेनानुत्पत्तेः । केचित्तु द्रव्यनाशं प्रति समवायिकारणनाशस्य हेतुत्वमतेऽसमवायिकारणनाशजन्यद्रव्यनाशे व्यभिचारवारणाय समवायिकरणनाशाजन्यत्वस्य समवायिकारणनाशजन्यतावच्छेदककोटौ निवेशेन गौरवात् सर्वत्रासमवायिकारणनाशादेव द्रव्यनाश उचित इत्याहुः । तदसत् कपालनाशजन्यारम्भकसंयोगनाशोत्पत्तिकाले घटादावुपदर्शितकारणसत्त्वेन तथाविधप्रतियोगितासम्बन्धेन नाशत्वावच्छिन्नस्यापत्तिवारणाय तथाविधप्रतियोगितासम्बन्धेन द्रव्यान्यनाशत्वावच्छिन्नं प्रति द्रव्यभेदत्वेनापि हेतुत्वस्याधिकस्य कल्पनीयतया तत्र तत्सहकारित्वस्य कल्पनीयतया च तुल्यत्वात् । तस्माद् द्रव्यनाशं प्रति समवायिकारणनाशस्यापि हेतुतावश्यकीति हृदयम् ।

चक्षुःसंयोगादिरूपकारणबलात् गगनादेः प्रत्यक्षतावारणाय बहिर्द्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति उद्भूतरूपत्वेन हेतुतां कल्पयित्वा प्राञ्चो वायोरप्रत्यक्षत्वमङ्गीकुर्वन्ति तन्मतं दूषयति । द्रव्यास्पार्शनप्रत्यक्ष इति । स्पर्शवत्त्वमेवेत्येवकारेण रूपव्यवच्छेदः । प्रयोजकं जनकम् । अत एव द्रव्यस्पार्शने स्पर्शस्य हेतुत्वा-

अत एव शीतो वायुरित्यादिप्रत्ययोऽपि[१] स्पार्श-नःसाधु सङ्गच्छते। त्रुटेरस्पार्शनत्वे तु प्रकृष्टतमं परिमाणमपि तथा गौरवान्मानाभावात्। त्व-ग्व्यापारानन्तरं वायुर्वातीति सार्वलौकिकप्रत्य-क्षस्यान्यथानुपपत्त्या च रूपं तत्र न निवेशनी-यम्। फूत्कारादौ च स्फुटतरप्रत्यक्षाः सङ्ख्यादयः चाक्षुषद्रव्यप्रत्यक्षे रूपं तथा गौरवान्मानाभावा-च्च। निःस्पर्शायामपि प्रभायां चलनादिप्रत्ययाश्च

देवेत्यर्थः। ननु द्रव्यस्पार्शनं प्रति स्पर्शस्य हेतुत्वे त्रुटेः स्पार्शनापत्तिरित्यत आह। त्रुटेरस्पार्शनत्वे त्विति। तुकारेण त्रुटेः स्पार्शनाभ्युपगमे तत्यभावः सू-चितः। प्रकृष्टतमं परिमाणमिति। त्रसरेणुमहत्त्व-व्यावृत्तयावन्महत्त्वसाधारणजात्यवच्छिन्नमित्यर्थः। ता-दृशजातिसिद्धिस्तु स्पार्शनजनकतावच्छेदकतयेति भावः। स्पार्शनजनकतावच्छेदककोटौ रूपनिवेशे बाधकमाह। गौरवादित्यादिना। प्रामाणिकं गौरवं न दोषायेत्यत आह। मानाभावादिति। तत्रेति स्पार्शनजनकतावच्छे-दककोटावित्यर्थः। द्रव्यस्पार्शनं प्रति स्पर्शस्य हेतुत्वं व्यव-स्थाप्य द्रव्यचाक्षुषं प्रति रूपस्य हेतुतां व्यवस्थापयति। चाक्षुषद्रव्यप्रत्यक्षे त्वित्यादिना। तथेति कारण-मित्यर्थः द्रव्यचाक्षुषजनकतावच्छेदककोटौ स्पर्शनिवेशे बा-

(१) इत्यारोपोऽपि-पा० १ पु०।

स्पर्शोऽपि न तथा द्रव्यस्य समवेतेन्द्रियजन्य-

धकमाह। गौरवादित्यादिना । न तथेति । न कार-णमित्यर्थः । अयमाशयः । बहिर्द्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति रूपस्य हेतुत्वं न सम्भवति । बहिष्ट्वस्य दुर्वचत्वात् । न चात्मभिन्नत्वमेव बहिष्ट्वं तथापि मानसान्यद्रव्य-प्रत्यक्षत्वमादाय कार्यतावच्छेदके विनिगमनाविरहस-म्भवात् । न च लाघवान्मूर्तप्रत्यक्षत्वमेव रूपजन्यता-वच्छेदकमस्तु वायोः प्रत्यक्षतासन्देहेन मूर्तप्रत्यक्षत्वस्य सन्दिग्धव्यभिचारकतया रूपकार्यतावच्छेदकत्वासम्भ-वात् । अपि च मूर्तप्रत्यक्षत्वावच्छिन्नं प्रति रूपस्य हेतु-तामभ्युपेत्य वायोः प्रत्यक्षत्वानङ्गीकारे वायोः स्प-र्शस्य स्पार्शनानुपपत्तिः । घटगगनसंयोगस्पार्शनवारणाय क्लृप्तस्य विजातीयसत्स्पार्शनत्वावच्छिन्नं प्रति स्वाश्रयसम-वेतत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्पार्शनविषयत्वा-भावाभावरूपहेतोरभावात् । न च स्पार्शनविषयत्वाभा-वाभावकार्यतावच्छेदककोटौ विजातीयसदंशे स्पर्शान्य-त्वमपि निवेश्यत इति वाच्यम् । विनिगमनाविरहेण कार्य-कारणभावानन्त्यात् कार्यतावच्छेदकगौरवाच्च । स्पार्शन-विषयत्वाभावाभावासहकृततत्सामान्यसामग्र्याः स्पर्श-स्पार्शनस्थले प्रसिद्धायाः गगनघटसंयोगादिप्रत्यक्षापत्ते-र्दुर्वारत्वाच्च । न च चरमदोषवारणाय स्पार्शस्पर्शनत्वाव-च्छिन्नं प्रति स्पर्शत्वेनापि हेतुत्वं कल्पनीयमिति वाच्यम् । तादृशकार्यकारणभावकल्पनस्यापि नैयायिकमते ऽधिक-गौरवसम्पादकत्वादित्यादिकं बहुतरमूहनीयं वायुप्रत्य-क्षतावाद इति । नन्वेवं सति बहिरिन्द्रियजन्यद्रव्यप्रत्यक्ष-त्वावच्छिन्नं प्रति अनात्मसमवेतरसगन्धशब्दजातीतरयो-ग्यधर्मसमवायित्वं कारणमिति समुदायार्थः । अत्रात्मनि

प्रत्यक्षे तु अनात्मसमवेतशब्दरसगन्धजातीतर-योग्यधर्मसमवायित्वम् । तथा सुखादिसमवा-यिकारणतावच्छेदकत्वेन सिद्धमात्मत्वं जातिर्नै-

रसादीतरज्ञानादिरूपयोग्यधर्मसमवायित्वात् बहिरिन्द्रि-यजन्यद्रव्यप्रत्यक्षत्वावच्छिन्नापत्तिवारणायानात्मसमवे-तत्वं धर्मविशेषणम् । आकाशादौ शब्दरूपतादृशधर्मस-त्त्वात् तद्धर्मावच्छिन्नापत्तिवारणाय शब्देतरत्वस्य निवेशः। वाय्वानीतजलीयभागचम्पकभागयोः रसगन्धरूपतादृश-योग्यधर्मसत्त्वात् तत्रोपदर्शितधर्मावच्छिन्नापत्तिवारणाय रसगन्धेतरेति । द्रव्यत्वादिजातिरूपतादृशधर्मसमवा-यित्वमादाय गगनादौ तादृशधर्मावच्छिन्नापत्तिवारणाय जातीतरेति । एतानि सर्वाणि विशेषणानि नित्यस्य स्व-रूपयोग्यस्य फलावश्यम्भाव इति व्याप्त्यङ्गीकारे सार्थका-नि तदनङ्गीकारे तु तत्तद्विशेषसामग्र्यभावादेवात्मादौ बहि-रिन्द्रियजन्यद्रव्यप्रत्यक्षत्वावच्छिन्नस्यापत्तिवारणसम्भ-वात् तादृशविशेषणान्यनुपादेयानीति हृदयम् । अत्र कार-णतावच्छेदककोटौ योग्यत्वविशेषणस्य व्यावृत्तिमाह । सुखादीति । तथा चात्मत्वजात्यवच्छिन्नभिन्नसमवेतत्व-त्वार्थकानात्मसमवेतत्वरूपविशेषणघटितोपदर्शितकारण-तावच्छेदकस्य ज्ञानादिकमादायेश्वरात्मनि सत्त्वात् तत्र तादृशधर्मावच्छिन्नापत्तिवारणाय धर्मे योग्यत्वं विशेषण-मिति भावः । अनात्मसमवेतेत्यत्र विषयिधर्मासमाना-धिकरणविवक्षायां तु योग्यत्वस्य दर्शितव्यावृत्तिर्न सङ्ग-

श्वर इति[1] तदीयज्ञानादिपिशाचादिसंयोगवा-रणाय योग्येति । विषयिधर्मासमानाधिकरणे[2]-त्यभिधाने तु शब्दो नोपादेयः । अस्मदादिनय-

---

च्छत इत्यतो व्यावृत्त्यन्तरमाह । पिशाचादिसंयोगेति । तथा च पिशाचादिसंयोगादिरूपतादृशधर्मसमवायित्वब-लात् पिशाचादौ तद्धर्मावच्छिन्नापत्तिवारणाय योग्यत्वेन धर्मो विशेषित इति भावः । विषयिधर्मासमानाधि-करणेति । विषयिधर्मसमानाधिकरणत्वावच्छिन्नप्रति-योगिताकभेदस्य तद्व्यक्तित्वेन निवेशिते त्वित्यर्थः । नातो ज्ञानादिसमानाधिकरणत्वावच्छिन्नप्रतियोगिताकभेदमा-दाय विनिगमनाविरहः । तथाविधभेदस्यैतादृशभेदसमनि-यततया ऐक्येन तद्व्यक्तित्वेनैकनिवेशनेनैव सर्वनिवेशस-म्भवादिति ध्येयम् । शब्दो नोपादेय इति । आकाश-स्येश्वरादनतिरिक्ततया शब्दस्य विषयिज्ञानादिसमा-नाधिकरणतया शब्दे तद्भिन्नत्वाभावेन गगने तथा-विधधर्मसमवायित्वाभावान्नोक्तापत्तिः सम्भवतीति भावः । बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति अनात्मसमवेतत्वादिविशेषणविशिष्टधर्मसमवायित्वस्य हेतुत्वे गौरवात् तदपहाय तत्र लघुकारणान्तरमाह । अस्मदादीत्यादि । अस्मदादेर्जीवात्मनः न नयनसंसृष्ट-पित्तद्रव्यस्य चेत्यर्थः । परिमाणशून्येत्यादि । इदं तु य-थानिर्देशक्रममन्वेति । तथा च जीवस्य परिमाणशून्यत्वमते

(१) सिद्धमात्मत्वं नेश्वरे-पा॰ २ पु॰ । सिद्धात्मत्वजातिस्तु नेश्वरे-पा॰ ३ पु॰
(२) विषयिधर्माधिकरणे-पा॰ १ । ३ पु॰ ।

नसंसृष्टपित्तद्रव्यस्य परिमाणशून्यत्वम् । परिमाणवत्त्वमते तु तादृशप्रत्यक्षे परिमाणवत्त्वमेव तथा । यद्वा नयनसंसृष्टपित्तद्रव्यं नीरूपमेव । अन्यथा पुरुषान्तरेण तत्पीतिमोपलम्भापत्तिः । स्मर्यमाणस्तु पीतिमा दोषवशाच्छङ्खादावारो-

नयनसंसृष्टपित्तद्रव्यस्य परिमाणवत्त्वमते त्विति समुदायार्थः । इदमुपलक्षणम् । वाय्वानीतचक्षुर्भागादेरपि परिमाणानङ्गीकारे इत्यपि बोध्यम् । तादृशप्रत्यक्षे । बहिरिन्द्रियजन्यप्रत्यक्षे । तथा । कारणम् । ननु नयनगतपित्त द्रव्ये परिमाणवत्त्वे प्रमाणाभावस्तदनुपलम्भादनुमानस्याप्रयोजकत्वात् प्रमाणान्तरस्याभावात् । तथा चोपदर्शितप्रत्यक्षे परिमाणस्य हेतुत्वे नयनसंसृष्टपित्तद्रव्यप्रत्यक्षानुपपत्तिरित्यत इष्टापत्त्या कल्पान्तरमाह । यद्वेति । नीरूपमेवेति । तथा च तत्र परिमाणानङ्गीकारेपि न क्षतिः । रूपस्वरूपविशेषकारणाभावात् तस्याप्रत्यक्षत्वेन उपदर्शितकार्यकारणभावे व्यभिचाराभावादिति भावः । अन्यथा तथाविधपित्तद्रव्यस्य रूपस्वीकारे इत्यर्थः । ननु नयनसंसृष्टपित्तद्रव्ये रूपानङ्गीकारे कथं शङ्खः पीत इत्यारोपः । तत्र नयनसंसृष्टपित्तद्रव्यरूपस्यैवानुभूयमानस्य शङ्खादावारोप्यमाणस्त्विति स्मर्यमाणनयनसंसृष्टद्रव्यनिष्ठपीतमिवारोपादित्यत आह । स्मर्यमाणस्त्विति । शङ्खादावारोप्यत इति । तथा च नयनगतपित्तद्रव्यरूपस्यानुभूयमानस्य शङ्खादावारोपानभ्युपगमाददोष इति

प्यत इति । द्रव्यप्रत्यक्षे च शब्दरसगन्धजातीतर-योग्यधर्मसमवायित्वम् । तथा रसनगतं च पित्तद्रव्यं न रूपवत् न वा स्पर्शवत् रसना च न द्रव्यग्राहिकेति न तत्प्रत्यक्षम् ॥

एतेन वायूपनीतसुरभिचम्पकभागोऽपि[1] व्याख्यातः ॥

भावः । द्रव्यप्रत्यक्षत्वावच्छिन्नेऽनुगतनियामकमाह । द्र-व्यप्रत्यक्षे चेत्यादि । तथा कारणम् । ननु रसेतरत्व-स्योपदर्शितकारणतावच्छेदके निवेशे रसनगतपित्तद्रव्यप्र-त्यक्षे व्यभिचारः । तत्र तथाविधयोग्यधर्मसमवायित्वा-भावादत आह । रसनगतं चेत्यादि । रूपवदित्यनेन चाक्षुषप्रत्यक्षनिरासः न स्पर्शवदित्यनेन स्पार्शनप्रत्यक्ष-निरासः । रसना च न द्रव्यग्राहिकेत्यनेन रासनप्रत्यक्ष-निरासः । तथा च रसनगतपित्तद्रव्यस्य प्रत्यक्षाभावान्नोप-दर्शितकार्यकारणभावे व्यभिचार इति भावः ।

एतेनेति । वाय्वानीतचम्पकभागादौ रूपादिसत्त्वे मानाभावेन प्रत्यक्षतानभ्युपगम एवेत्यर्थः । वाय्वानीतचम्प-कभागोऽपीति वाय्वानीतचम्पकभागे व्यभिचारोऽपीत्यर्थः । व्याख्यातः प्रत्युक्त इत्यर्थः । बहिरिन्द्रियजन्यद्रव्यप्रत्य-क्षादौ कारणकथनं तु प्रौढ्या । वस्तुतस्तस्याभावेऽपि न क्षतिः । गगनादेः प्रत्यक्षवारणं तु लाघवादवश्यक्लृप्तेन द्रव्यलौकि-कस्पार्शनत्वावच्छिन्नं प्रति स्पर्शहेतुत्वेन द्रव्यचाक्षुषं प्रति

(१) चन्दनभागोऽपि-पा० २ । ३ पु० ।

घटत्वादेरप्यभावो न घटत्वत्वादिना रूपेण प्रत्यक्षः तस्यातीन्द्रियत्वात्। एवं न जातित्वा-दिना रूपेणापीति सर्वथैवाप्रत्यक्षः॥

सत्ता च न द्रव्यगुणकर्मवृत्तिरेका प्रत्यक्ष-सिद्धा जातिः। धर्मादीनामतीन्द्रियत्वेन तत्र प्रत्यक्षायोगात् जात्यादावपि सद्व्यवहाराच्च।

रूपहेतुत्वेन सम्पादनीयमिति ध्येयम्॥

घटत्वाभावस्य लौकिकप्रत्यक्षाभावमुपपादयति। घ-टत्वादेरभाव इत्यादिना तस्य घटत्वस्य। अतीन्द्रि-यत्वादिति। घटेतरावृत्तित्वे सति घटनिष्ठान्योन्याभा-वप्रतियोगितानवच्छेदकत्वरूपतया तस्यातीन्द्रियत्वादि-ति। घटेतरावृत्तित्वस्य कालादिघटितत्वादित्यर्थः। तथा चातीन्द्रियधर्मावच्छिन्नप्रतियोगिताकाभावस्य लौकिकप्र-त्यक्षासम्भवे तत्तद्धटत्वत्वावच्छिन्नप्रतियोगिताकाभावस्य लौकिकप्रत्यक्षमिति भावः। एवमिति। अतीन्द्रियधर्मा-वच्छिन्नप्रतियोगिताकाभावस्य लौकिकप्रत्यक्षाभावेनेत्यर्थः। जातित्वरूपेणेति। जातित्वस्य नित्यानेकसमवेतत्व-रूपतया अतीन्द्रियध्वंसादिघटितनित्यत्वघटितत्वेनाती-न्द्रियत्वादिति भावः। अत्र तत्तद्व्यक्तित्वेन घटत्वाद्यभाव-लौकिकप्रत्यक्षवारणं तु सुधीभिश्चिन्त्यम्। तत्तद्व्यक्तित्वं च अतिरिक्तं घटत्वादितादात्म्यस्वरूपं वेत्यन्यदेतत्॥

सत्तायाः जातित्वं निराकरोति। सत्ता चेति। ननु यावद्द्रव्यगुणकर्मसु प्रत्यक्षसिद्धा सा जातिः कथमपलाप-नीयेत्यत आह। द्रव्यगुणेत्यादि। धर्मादीनामिति।

घटादौ सद्व्यवहारश्च वर्तमानत्वनिबन्धनः । किं तु भावत्वं तत् । तच्चाभावान्यत्वम् । अभावत्वमेव वानुगतप्रत्ययसिद्धोऽखण्डोपाधिः भावत्वं वाखण्डोपाधिः । तच्च ज्ञेयत्वादिवत्

आदिना गगनादिपरमाणुक्रियापरिग्रहः । ननु सन्नित्यादिव्यवहारबलादेव सा जातिरायास्यतीत्यत आह । जात्यादावपीति । तथा च सत्त्वव्यवहारस्य सत्ताजातिविषयत्वे जातावपि सद्व्यवहारो न स्यात् अतो भावत्वादिकमेव तद्व्यवहारविषय इति न तादृशव्यवहारेण सत्ताजातिसिद्धिरिति भावः । ननु घटः सन्नित्यादिव्यवहारस्यान्यथानुपपत्तिसिद्धायां सत्ताजातौ सत्त्वव्यवहारस्यैकार्थसमवायसम्बन्धेन सत्ताजातिरेव विषयो न भावत्वादिकमित्यत आह । घटादाविति । तथा च घटः सन्नित्यादिव्यवहारस्यापि वर्तमानत्वादिविषयकत्वेनैवोपपत्तौ न तदन्यथानुपपत्त्या सत्ताजातिसिद्धिरिति भावः । न च वर्तमानत्वादेरननुगततया अनुगतसद्व्यवहारो विना सत्ताजातिं न निर्वहतीति वाच्यम् । अनुगततया व्यवहारानभ्युपगमादिति । ननु सच्छब्दशक्यतावच्छेदकतया सत्ताजातिरायास्यतीत्यत उपसंहारव्याजेन तामाशङ्कां निराकरोति । किं त्विति । तदिति । सत्तास्वरूपमित्यर्थः । तथा च सच्छब्दशक्यतावच्छेदकमपि भावत्वमेव न तु सत्ताया अतिरिक्तस्वरूपत्वमिति भावः । अत्र वर्तमानत्वादिकमननुगतत्वादुपेक्षितमिति ध्येयम् । ननु भावत्वस्यापि सर्वसाधारणानुगतस्याभावात् कथं तदपि सच्छब्द-

शक्यतावच्छेदकमित्यत आह। तच्चेति। भावत्वं चेत्यर्थः। ननु भावत्वमेवाखण्डोपाधिस्तद्भिन्नत्वमेवाभावत्वमित्येव किं न स्यादित्यत आह। अभावत्वमेवेति। एवकारोऽप्यर्थे। तथा च विनिगमनाविरहादुभयोरेवाखण्डोपाधित्वमिति भावः। नन्वेवं सति भावत्वं भावो न स्यादित्यत आह। तच्चेति। भावत्वं चेत्यर्थः। इदमत्र तत्त्वम्। जन्यसत्त्वावच्छिन्नं प्रति द्रव्यत्वेन हेतुतया द्रव्यजन्यतावच्छेदककोटिप्रविष्टतया सत्ताजातिसिद्धिः। न च तादृशकार्यकारणभावे मानाभाव इति वाच्यम्। नीलादौ स्वाश्रयसमवेतत्वसम्बन्धेन नीलरूपकारणसत्त्वात् समवायेन नीलापत्तिवारणाय तादृशकार्यकारणभावस्यावश्यकत्वात्। न च समवायसम्बन्धेन नीलादिकं प्रति स्वश्रायसमवेतत्वविशिष्टद्रव्यत्वसम्भन्धेन नीलादेर्हेतुत्वकल्पनात् त्रिविधकार्य(१)कारणभावान्तरकल्पनमिति वाच्यम्। स्वाश्रयसमवेतत्वद्रव्यत्वयोर्विशेषणविशेष्यभावे विनिगमनाविरहेण कार्यकारणभावबाहुल्येन कारणतावच्छेदकसम्बन्धगौरवेण चातिरिक्तोपदर्शितकार्यकारणभावकल्पनस्यैवोचितत्वात् उपदर्शितकार्यतावच्छेदककोटौ जन्यत्वनिवेशाद्गौरवम् जन्यत्वस्य कालिकसम्बन्धेन घटत्वादिमत्त्वरूपस्यापि वक्तुं शक्यत्वादिति तु नाशङ्कनीयम्। यतोऽत्र कालिकसम्बन्धेन घटादिमत्त्वरूपजन्यत्वनिवेशे तस्य महाकालसाधारण्येन प्रकृते कर्यतावच्छेदकस्य नित्यसाधारण्यं न सङ्गच्छत इति ध्वंसप्रतियोगित्वरूपं प्रागभावप्रतियोगित्वरूपं वा जन्यत्वमत्र निवेशनीयम्।

(१) कल्पनाच्च तथाविधकार्य—ख० ३ पु०।

घटाभावादिवत्स्ववृत्त्यपि ॥

एवं गुणत्वमपि न रूपादिचतुर्विंशता-वैका प्रत्यक्षसिद्धा जातिः । अतीन्द्रियेषु प्रत्यक्षा-योगात् । तुरगादेरुत्कृष्टगतिमत्त्वे ब्राह्मणादेश्च

---

वस्तुतस्तु नित्यवृत्तिधर्मस्यापि कार्यतावच्छेदकत्वाङ्गीकारेण सत्त्वमात्रस्यैव द्रव्यकार्यतावच्छेदकतया जन्यत्वस्य तत्र निवेश एव नास्ति क्व विनिगमनाविरहेण तस्य नानाविधतया गौरववार्ता । अत एव समवायसम्बन्धेन जन्यत्वमेव कार्यतावच्छेदकमस्तु किं तत्र सत्ताया निवेशनेनेति नोपदर्शितयुक्तिः सत्ताजातिसाधिकेत्यपि निरस्तम् । जन्यत्वस्य गुरुतया तदपहाय सत्ताया एव तत्र निवेशनौचित्यात् । यदि च जन्यत्वमखण्डोपाधिः तथापि जन्यमात्रवृत्तिभेदव्यक्तेस्तद्व्यक्तित्वेन तथात्वमादाय विनिगमनाविरहेण सत्ताया एव तथात्वौचित्यात् । न च सत्तायास्तथात्वे ऽपि तथाविधभेदादिकमादाय विनिगमनाविरह इति वाच्यम् । सत्ताया धर्मिग्राहकमानसिद्धत्वादित्यधिकं सत्ताजातिविचारे ऽनुसन्धेयमिति ॥

गुणत्वजातिं खण्डयति । एवमिति । वक्ष्यमाणयुक्त्येत्यर्थः । वक्ष्यमाणयुक्तिमेव स्फोटयति । अतीन्द्रियेष्विति । अतीन्द्रियरूपादिष्वित्यर्थः । प्रत्यक्षायोगादिति । इदमुपलक्षणम् । अनुमानस्याप्रयोजकत्वादित्यपि द्रष्टव्यम् । ननु रूपादिष्वनुगतगुणव्यवहारबलादेव गुणत्वजातिः सेत्स्यतीत्यत आह । तुरगादेरित्यादि ।

दोषाद्यभावे ऽपि गुणाव्यवहाराच्च। एकस्य कार्य-तावच्छेदकस्य विरहे ऽपि येन केनापि रूपेण कारणत्वाद्यनुगमय्य जातिकल्पने चातिप्रसङ्गो जातिसङ्करप्रसङ्गश्चेति दिक्। शाब्दादिज्ञाने

तथा च यथा तुरगादौ गत्यादिनिष्ठोत्कर्षमादाय गुणव्यवहारस्तथा रूपादिष्वपि उत्कर्षादिकमादाय गुणव्यवहारोपपत्तौ चतुर्विंशतिगुणसाधारणानुगतगुणत्वजातौ प्रमाणाभावादिति भावः। द्रव्यकर्मान्यसामान्यवद्वृत्तिकारणतात्वेनानुगतीकृतानां रूपादिकारणतानामवच्छेदकतया गुणत्वजातिरायास्यतीत्याचार्या अनुमन्यन्त इति तन्मतं दूषयति। एकस्येति। अनुगतस्येत्यर्थः। येन केनापि रूपेणेति। द्रव्यकर्मान्यसामान्यवद्वृत्तित्वेनेत्यर्थः। अनुगमय्येति। तदवच्छेदकत्वेनेति शेषः। अतिप्रसङ्ग इति। रूपद्रव्यकर्मेतरसामान्यवद्वृत्तित्वेनानुगतीकृतानां कारणतानामवच्छेदकत्वेन रूपव्यावृत्तत्रयोविंशतिगुणवृत्तिजातेरपि सिद्धिप्रसङ्ग(१) इत्यर्थः। अत्रेष्टापत्तौ दूषणान्तरमाह। जातिसङ्करेति। तुल्ययुक्तया रूपद्रव्येतरसामान्यवद्वृत्तिकारणतावच्छेदकत्वेन रसादित्रयोविंशतिगुणकर्मसाधारणजातिसिद्धा तयोः सङ्करप्रसङ्ग इत्यर्थः। इदमत्र बोध्यम्। असति बाधके गुणपदशक्यतावच्छेदकत्वेन गुणत्वजातेः सिद्धौ बाधकाभावः। न च तथा सति विभुपदशक्यतावच्छेदकत्वेन विभुचतुष्टयमात्रवृत्तिजातिसिद्धिप्रसङ्ग इति शिरोमण्युक्तं

(१) गुणत्वजातिसिद्धिः सम्भवतीति-पा. ३ पु.।

ऽनुभवव्यवहारश्च स्मृत्यन्यज्ञानत्वनिबन्धनः । जातिस्त्वनुभवत्वं साक्षात्कारित्वमेव । साक्षात्कारिणि ज्ञान एव तत्प्रत्ययात् । सत्यपि चानु-

---

दूषणं युक्तम् । इदानीमीश्वरजीवातिरिक्तस्य विभुत्वे मानाभावेन विभुत्वस्यात्मत्वतुल्यवृत्तितया आत्मत्वातिरिक्तजातित्वे तुल्यव्यक्तिवृतित्वरूपबाधकसत्त्वे तथा दोषानवकाशात् आकाशादीनामतिरिक्तत्वपक्षे ऽपि तथा स्वीकारे बाधकाभावाच्चेति । इदं पूर्णाय परमात्मने इत्यत्रेश्वरं आत्मपदव्यपदेशं कुर्वतो दीधितिकृतोपि सम्मतम् । अन्यथा आत्मपदशक्यतावच्छेदकत्वं विना ईश्वरसाधारणात्मत्वजातौ युक्त्यन्तराभावेन तथा व्यपदेशो ऽसङ्गत एव स्यादिति । अनुभवचतुष्टयसाधारणीमनुभवत्वजातिं प्रचीनसम्मतां दूषयितुमाह । शाब्दादिज्ञाने चेति । स्मृत्यन्यज्ञानत्वनिबन्धन इति । एतेनानुभवव्यवहारबलादनुभवत्वं जातिरित्यपास्तम् । ननु तथाप्यनुभवामीत्यनुव्यवसायबलादनुभवत्वजातिरायास्यतीत्यत आह । जातिस्त्विति । साक्षात्कारित्वमेवेति । प्रत्यक्षत्वमेवेत्यर्थः । तथा च प्रत्यक्षत्वातिरिक्तानुभवत्वजातौ मानाभाव इति भावः । प्रत्यक्षत्वातिरिक्तानुभवचतुष्टयवृत्त्यनुभवत्वजातिस्वीकारे बाधकमप्याह । सत्यपि चेति । तथा च तादृशजातिविशेषस्वीकारे सुखाद्यनुमित्यनन्तरमपि तथानुव्यवसायापत्तिरिति भावः । केचित्तु विशेषणज्ञानादिजन्यतावच्छेदककोटिप्रविष्टतयाऽनुभवत्वजातिसिद्धिः । अन्यथा विशिष्टबुद्धित्वादेस्तथात्वे स्मृतौ व्यभिचारप्रसङ्ग

मानिकादिसुखादिनिश्चये सुखादिकमनुभवामीति प्रत्ययाभावादिति ॥

इत्याहुः। तदप्यसत्। प्रत्यक्षत्व एव तज्जन्यतावच्छेदकत्वोपपत्तौ अतिरिक्तानुभवत्वस्य तत्र निवेशे प्रयोजनाभावात्। न च विशिष्टप्रत्यक्षत्वावच्छिन्नं प्रति विशेषणज्ञानादेर्हेतुत्वे विशेषणज्ञानादिकं विना अनुमित्याद्यात्मकविशिष्टबुद्ध्यापत्तिरिति वाच्यम्। अनुमित्यादिपूर्वं परामर्शादेरावश्यकत्वेन तथा वक्तुमशक्यत्वात्। न चैवं सति साध्यविशेष्यकानुमितिविलोपप्रसङ्गः इतरभेदज्ञानाभावदशायामपि इतरव्यापकीभूताभावप्रतियोगिपृथिवीत्ववती पृथिवीत्याकारकव्यतिरेकव्याप्त्यवगाहिपरामर्शसम्भवेन तस्मात् तदानीमपि साध्यविशेषणकानुमितेरपि सम्भवादिति वाच्यम्। तावता क्षत्यभावात्। भवतु वा विशिष्टानुमितित्वावच्छिन्नं प्रत्यपि विशेषणज्ञानादेर्हेतुत्वम्। न चैवं गौरवावकाशः नित्यवृत्तिधर्मस्य कार्यतावच्छेदकत्वाभावेन शुद्धानुभवत्वेन तथा सम्भवेन जन्यत्वनिवेशे कालिकसम्बन्धेन घटत्वादिमत्त्वमादाय विनिगमनाविरहेणानन्तकार्यकारणभावद्वद्ध्या तदपेक्षया तथाविधकार्यकारणभावद्वयस्यैव सम्यक्त्वात्। न च प्रत्यक्षत्वस्य जन्यतावच्छेदकत्वेऽपि स दोषस्तदवस्थ इति वाच्यम्। ईश्वरप्रत्यक्षव्यावृत्तास्मदादिप्रत्यक्षसाधारणजातिविशेषमभ्युपेत्य तस्यैव तथात्वोपगमात्। अनुभवत्वमपि तथा सम्भवतीति तु न मन्तव्यम्। तथा सति प्रत्यक्षत्वेन सङ्करप्रसङ्गात्। न चैवमनुभवं प्रत्येव वेति दीधितिविरोधः। युक्तया पदार्थतत्त्वविवेकस्य ग्रन्थविरोधेनानिवारणीयत्वादित्यादि निपुणतरमत्रानुसन्धेयमिति संक्षेपः ॥

एवं घटाद्यभावस्याप्यभावोऽतिरिक्त एव । घटादिमति तदभावो नास्तीत्यबाधिताभावत्वप्रत्ययात् । न चैवमनवस्था एकस्यैव घटाभावस्य स्वाभावाभावरूपत्वे[1] विरोधाभावात् । [2]अन्योन्याभावस्यान्योन्याभावो भावत्वं संसर्गा-

---

तदत्यन्ताभावाभावस्य तत्स्वरूपत्वमभ्युपगच्छतां प्राचां मतं दूषयितुमाह । एवमिति । वक्ष्यमाणयुक्त्येत्यर्थः । अतिरिक्त एवेति । घटाद्यतिरिक्त एवेत्यर्थः । तदभावो नास्तीति । घटाद्यभावो नास्तीत्यर्थः । अभावत्वप्रत्ययादिति । घटाद्यभावाभावस्य घटादिभावस्वरूपत्वेऽभावत्वेन प्रत्ययानुपपत्तिः । भावेऽभावत्वाभावादिति भावः । न च भावाभावसाधारणमभावत्वमखण्डोपाधिरित्युक्तौ नायं दोष इति वाच्यम् । एवं सति लाघवादेव घटाभावाभावस्यातिरिक्तत्वसिद्धेः लाघवानादरेऽभावमात्रस्यानतिरिक्तत्वसिद्धिप्रसङ्गादित्यादिकमवधेयम् । ननु घटाद्यभावाभावस्यातिरिक्तत्वे तुल्ययुक्त्या तदभावस्याप्यतिरिक्तत्वमभ्युपगन्तव्यम् एवं तदभावस्यापीत्यनवस्थेत्याशङ्कां निराकरोति । न चैवमिति । अभावाभाववत् तदभावादेरप्यतिरिक्तत्वे इत्यर्थः । एकस्यैवेति । घटाद्यभावस्यैवेत्यर्थः । स्वाभावाभावरूपत्वइति । घ-

---

(१) घटतदभावाभावरूपत्वे —पा० ३ पु. ।

(२) अन्योन्याभावस्य भावत्वं संसर्गाभावत्वं चान्योन्याभावः । इत्यधिकं ३ पु.

भावत्वं च अतिरिक्तान्योन्याभावाङ्गीकारे ऽनवस्थाप्रसङ्गात्। ध्वंसप्रागभावयोश्चातिरिक्तावेव प्रागभावध्वंसौ। घटादेः सत्त्वकाले तस्य प्रागभा-

---

टाभावस्य घटाभावाभावाभावस्वरूपत्वे इत्यर्थः। तथा च घटाभावाभावस्याप्यभावो घटाभाव एव न त्वतिरिक्त इति नानवस्थेति भावः। भावत्वं संसर्गाभावत्वं चेति। इदं चान्योन्याभावत्वावच्छिन्नस्यान्योन्याभावमवलम्ब्योक्तम्। घटान्योन्याभावस्य त्वन्योन्याभावोभावत्वं संसर्गाभावत्वं पटाद्यन्योन्याभावत्वं चेत्यपि बोध्यम्। केचित्तु अन्योन्याभावस्याप्यन्योन्याभावोऽतिरिक्त एव। न चैवमनवस्था। तस्याप्रामाणिकत्वेनादोषत्वात्। अन्यथा अन्योन्याभावमात्रस्यैवातिरिक्तत्वविलोपप्रसङ्गात्। सर्वत्र तदधिकरणमात्रवृत्तिधर्म एव तत्स्वरूपत्वकल्पनसम्भवादिति वदन्ति। ध्वंसप्रागभावयोः प्रागभावध्वंसौ प्रतियोगिस्वरूपौ इत्युपगच्छतां प्राचां मतं दूषयितुमाह। ध्वंसप्रागभावयोश्चेति। तस्येति। घटादेरित्यर्थः। ध्वंसप्रागभावौ न स्त इति। ध्वंसो नास्ति प्रागभावो नास्तीत्यर्थः। यदि च तयोरत्यन्ताभावविषयकत्वेनैवोपपत्तेर्न ध्वंसप्रागभावप्रागभावध्वंसयोरतिरिक्तत्वे साधकमिति विभाव्यते। तदा घटध्वंसो भविष्यति घटप्रागभावो नष्ट इत्यादिप्रतीतिर्ध्वंसप्रागभावप्रागभावध्वंसयोरतिरिक्तत्वसाधिकेत्यवधेयम्। न चैवं सति अभावत्वप्रत्ययादित्युत्तरग्रन्थविरोधः तयोः प्रागभावध्वंसत्वावलम्बनादिति वाच्यम्। अभावत्वप्रत्ययादित्यस्य प्रागभावध्वंसत्वावगा-

वध्वंसौ न स्त इत्यबाधिताभावत्वप्रत्ययात् । प्रागभाव एव न पारमार्थिक इत्यन्ये ॥

प्रत्यभिज्ञायाश्च तत्तागोचरसंस्कार एव हेतुरिति प्राञ्चः । न च तस्याः संस्कारजन्यज्ञानत्वे स्मृतित्वापत्तिः तज्जन्यज्ञानत्वस्य तत्र प्रयोजकत्वादिति वाच्यम् । किमिदं प्रयोजकत्वं नाम । न व्यापकत्वमविरोधात् न व्याप्यत्वं प्रमाणाभा-

---

हिप्रत्ययादिःत्यर्थकत्वात् तयोर्भावाभावसाधारणातिरिक्ताखण्डोपाधित्वाभ्युपगमे तु ध्वंसप्रागभावप्रागभावध्वंसयोरनिरिक्तत्वे लाघवस्यैव शरणीकरणीयत्वादित्यवधेयम् । प्रागभावाभ्युपगम एव ध्वंसप्रागभावप्रागभावध्वंसयोरतिरिक्तत्वानतिरिक्तत्वचिन्ता स एव नास्ति प्रमाणाभावादित्यभिप्रेत्याह । प्रागभाव एवेति । अपर इत्यनेनास्वरसः सूचितः तद्बीजं तु प्रागभावविचारे प्रागभावस्यातिरिक्तत्वव्यवस्थापनावसरे ऽनुसन्धेयम् इह तु विस्तरभिया न लिखितमिति ॥

संस्कार एव हेतुरिति । इदमत्राकूतम् । तन्निष्ठलौकिकान्यविषयताशालिप्रत्यक्षं प्रति तद्विषयकत्वेनैव ज्ञानलक्षणायाः कारणत्वं कल्प्यते न तु ज्ञानत्वान्तर्भावेन तत् गौरवात् । एवं सति कृत्यादिसाक्षात्कारात् पूर्वमपि नियमतो विषयस्मृतिकल्पनमपि नास्ति । कृत्यादित एव कृत्यादिसाक्षात्कारे विषयभानोपपत्तेरिति । अविरोधादिति । प्रत्यभिज्ञायाः संस्कारजन्यत्वेऽपि तथाविधव्या-

वात्। परं त्वनुद्भूते ऽभिभूते वा तत्तासंस्कारे प्रत्यभिज्ञाया अनुत्पादेन तत्तास्मृतिरेव तद्धेतुरिति मन्तव्यम् ॥

क्षणाश्च क्षणिकोऽतिरिक्तः कालोपाधिः। वि-

---

पकताया अक्षतेरित्यर्थः। प्रमाणाभावादिति। तादृशव्याप्तिग्रहानुकूलतर्काभावादित्यर्थः। तथा च प्रकृते प्रयोजकत्वस्य दुर्वचत्वेन तथा वक्तुमशक्यतया प्रत्यभिज्ञायाः संस्कारजन्यत्वे न किञ्चिद्बाधकमिति भावः। प्राचीनमतं दूषयति। परं त्विति। अनुद्भूते। उद्बोधकासमवहिते। अभिभूते। स्मृतिप्रतिबन्धकसमवहिते। तत्तास्मृतिरेवेति। एवकारेण संस्कारस्य प्रत्यभिज्ञाहेतुत्वव्यवच्छेदः। अयमाशयः। तन्निष्ठलौकिकान्यविषयताशालिप्रत्यक्षं प्रति तद्विषयकत्वेन ज्ञानलक्षणाप्रत्यासत्तेर्हेतुत्वे घटपटादिगोचरानुद्बुद्धसंस्कारदशायां घटपटाद्युपनीतभानप्रसङ्गः। अनुद्बुद्धभिन्नतद्विषयकत्वेन तत्र हेतुत्वे तु प्रथमतोऽनुद्बुद्धसंस्कारस्य पश्चादुद्बोधकसमवधानदशायां घटाद्युपनीतभानाजनकत्वप्रसङ्गः। अन्योन्याभावस्य व्याप्यवृत्तित्वनियमात् तस्याव्याप्यवृत्तित्वाभ्युपगमे ऽप्युद्बोधकानामननुगततया तावद्भेदकूटविशिष्टतद्विषयकत्वेन तत्र हेतुत्वे महागौरवप्रसङ्गः। अतो लाघवात्तद्विषयकज्ञानत्वेनैव तत्र हेतुत्वं कल्प्यते। तथा हेतुत्वकल्पने च नियमतः प्रत्यभिज्ञा कृतिसाक्षात्कारपूर्वं तत्ताविषयकस्मृतिकल्पनस्य फलमुखत्वेन गौरवासम्पादकत्वादित्यादिकमन्यदूहनीयम् ॥

भागप्रागभावविशिष्टं कर्मैव तथेति चेत् । न उदीच्यकर्मजन्यविभागप्रागभावविशिष्टस्य कर्मणः क्षणचतुष्टयावस्थायित्वात् । स्वजन्यविभागप्रागभावविशिष्टं तत् तथेति चेत् तर्हि स्वत्वाननुगमादननुगमः जाते च विभागे कुतः

क्षणस्यातिरिक्तत्वं व्यवस्थापयति । क्षणश्चेति । क्षणपदार्थ इत्यर्थः । अतिरिक्त इति । क्लृप्तभावाभावेभ्योऽतिरिक्त इत्यर्थः । शङ्कते । विभागेति । तथा च क्लृप्तेन निर्वाहे व्यर्थमतिरिक्तपदार्थकल्पनमिति भावः । उदीच्येत्यादि । तथा च क्षणचतुष्टयान्तर्भावेन तत्र क्षणव्यवहारापत्तिः । न चैवमिष्टापत्तिः । तथा सति घटप्रागभावक्षणेपि घटवान् क्षण इति व्यवहारापत्तेरिति भावः । शङ्कते । स्वजन्येत्यादि । स्वपदं तत्तत्क्रियापरम् । उदीच्यकर्मणः स्वजन्यविभागप्रागभावविशिष्टत्वेन पूर्वक्षणचतुष्टयानवस्थायित्वात् नोपदर्शितानुपपत्तिरिति भावः । तत्तत्कर्मणस्तत्क्षण इत्यर्थः । स्वत्वाननुगमादिति । स्वत्वस्य तत्तद्व्यक्तिविश्रान्ततयेत्यर्थः । अननुगम इति । क्षणत्वस्याननुगम इत्यर्थः । अनुगतक्षणव्यवहारानुपपत्तिमुक्त्वा तथाविधक्रियैव क्षण इति लक्षणे प्रश्नव्याजेनाव्याप्तिमप्याह । जाते विभाग इत्यादि । जायमाने विभाग इत्यर्थः । तथा चोक्तलक्षणे द्वितीयक्षणेऽव्याप्तिरिति भावः । इदं च प्रतिक्षणं क्रियाया उत्पत्तौ मानाभाव इत्यभिप्रेत्यो-

क्षणव्यवहारः विभागपूर्वसंयोगविशिष्टात् कर्मणा एवेति चेत् तर्हि सुतरामननुगमः। एवं पूर्वसंयोगनाशकाले उत्तरसंयोगकाले ऽपि कर्मसत्त्वे क्षणत्वं वक्तव्यमिति। अदृष्टदशरथादीनां

क्षम्। तथात्वे तु नायं दोष इति ध्येयम्। उक्तलक्षणस्य अलक्ष्यं द्वितीयलक्षणमभ्युपेत्योक्ताव्याप्तिं वारयितुमुत्तरव्याजेनाशङ्कते। विभागपूर्वसंयोगविशिष्टात् कर्मणा इति। स्वजन्यविभागपूर्वसंयोगोभयविशिष्टात् कर्मण इत्यर्थः। तथा च लक्ष्यभेदेन लक्षणस्य नानात्वान्नोक्ताव्याप्तिरिति भावः। अव्याप्तिदोषस्यैवंक्रमेण परिहारे ऽप्यननुगमदोषस्यानुद्धारादित्यभिप्रेत्य दूषयति। तर्हीत्यादि। प्रकारान्तरेणाप्यननुगमं दर्शयति। एवमिति। स्वजन्यविभागप्रागभावविशिष्टकर्मणः स्वजन्यविभागपूर्वसंयोगोभयविशिष्टकर्मणश्च क्षणत्वमिवेत्यर्थः। एवंशब्दस्याव्ययत्वेन नानार्थत्वात् प्रकृते दृष्टान्तपरता। वक्तव्यमिति। पूर्वसंयोगनाशोत्पत्तिविशिष्टक्रियाया उत्तरसंयोगोत्पत्तिविशिष्टक्रियायाश्च क्षणत्वं वक्तव्यमित्यर्थः। इदमुपलक्षणम्। पूर्वसंयोगनाशोत्तरसंयोगप्रागभावोभयविशिष्टक्रियाया अपि क्षणत्वमवसेयम्। तथा चाव्याप्तिरूपदोषस्य परिहारेऽपि क्षणपदार्थाननुगमरूपदोषो दुरुद्धर इति भावः। न चैवं क्षणत्वमेवातिरिक्तमभ्युपेयम् तेनैवानुगतलक्षणव्यवहारनिर्वाहात् किं क्षणपदार्थस्यातिरिक्तत्वाभ्युपगमेनेति वाच्यम्। विनिगमनाविरहेणैककालोत्पन्ननानातथाविधक्रियासु क्षणत्वसम्बन्धकल्पनामपेक्ष्यातिरिक्तक्षणम-

श्चेदानीन्तनानां दशरथपदात् अन्येषामपि पिशाचादिपदात् केन रूपेण पदार्थोपस्थितिरित्यवहितैः परिभावनीयं सूरिभिरिति कृतं पल्लवितेन ॥

भ्युपेत्य तत्रैव तत्सम्बन्धकल्पनाया लघीयस्त्वात् । ननु इदानीन्तनानां दशरथादिपदात् कथं शाब्दबोधः । इदानीन्तनदशरथत्वादिप्रकारकग्रहाभावेन विशेषणग्रहाभावात् दशरथत्वविशिष्टादौ शक्तिग्रहासम्भवेन दशरथपदजन्यदशरथत्वादिविशिष्टपदार्थोपस्थितेरभावात् । एवं कथं वा पुंसां पिशाचादिपदात् पिशाचत्वादिविशिष्टस्य शाब्दबोधः पूर्वदर्शितरीत्या पदजन्यपदार्थोपस्थित्यभावादित्याशङ्कामपनेतुमाह । अदृष्टदशरथेत्यादि । परिभावनीयमिति । भावनया निर्वाह्यमित्यर्थः । तथा चायं पूर्वपक्षो न दुःसमाधेयः । किं तु भावनासमाधानक इति भावः । भावनासाध्यसमाधानत्वे तादृक् यत्र प्रमेयवानयमित्यनुभवजन्यः प्रमेयवानयमिति संस्कारो जातस्तदनन्तरं तस्मात्प्रमेयत्वांशे दोषवशाद्दशरथत्वमात्रप्रकारकस्मृतिजनकोद्बोधकवशाद्दशरथत्वप्रकारकस्मरणं तत्र दशरथत्वविशिष्टे शक्तिग्रहसम्भवेन तज्जन्यदशरथत्वादिविशिष्टोपस्थितेः सुलभतया दशरथत्वादिप्रकारकशाब्दबोधे बाधकाभावः । एवं पिशाचादिपदस्थलेऽपि द्रष्टव्यम् । यदि च तदंशे ऽन्याप्रकारकस्मृतिं प्रति तदंशे ऽन्याप्रकारकतत्प्रकारकसंस्कारस्य हेतुत्वमावश्यकम् अन्यथा जातित्वरूपेण घटत्वप्रकारकसंस्कारादपि जातित्वांशे मोक्षदशायां

एवं स्वत्वमपि पदार्थान्तरम्। यथेष्टविनियोगयोग्यत्वं तदिति चेत् कोऽसौ विनियोगः। भक्षणादिकमिति चेत्। न परकीये ऽप्यन्नादौ तत्सम्भवात्। शास्त्रनिषिद्धं तथेति चेत् किं

घट इति स्मरणापत्तेः तथा च कथमुपदर्शितरीत्या दशरथादिपदात् दशरथत्वादिविशिष्टे शक्तिग्रहस्योपपादनं तज्जन्यशाब्दबोधोपपादनं चेति विभाव्यते । तथापि यत्र दशरथत्वादिसम्बन्धेन घटादेः भ्रमो जातः तत्र तथाविधशक्तिग्रहाद्युपपादनं भवत्येव । न च तस्य सम्बन्धतायां मानाभावः संयोगादौ सम्बन्धतायुक्तेरत्रापि तौल्यादित्यलमधिकेन ॥

एवं स्वत्वमपीति। चैत्रस्येदं धनमित्यादिप्रतीतिविषयो धनवृत्तिचैत्रनिरूपितसम्बन्धोपीत्यर्थः। पदार्थान्तरमिति। नैयायिकानां स्वत्वत्वेन व्यवह्रियमाणं यत्तदपेक्षया अतिरिक्तमित्यर्थः। ननु क्लृप्तेन निर्वाहे किं तत्रातिरिक्तत्वकल्पनेनेत्याशयेन शङ्कते। यथेष्टेत्यादि। तत्। स्वत्वम्। तत्सम्भवादिति। भक्षणसम्भवादित्यर्थः। तथा च तथाविधभक्षणे कृते पुरुषान्तरीयान्नादौ स्वत्वापत्तिरिति भावः। तत्। भक्षणम्। तथा विनियोगः परकीयान्नादिभक्षणस्य शास्त्रनिषिद्धत्वान्न तद्योग्यतामादाय पुरुषान्तरस्यान्नादौ पुरुषान्तरस्य स्वत्वापत्तिरिति भावः। तथाविधशास्त्राज्ञाने तद्घटितस्वत्वलक्षणस्य दुर्ज्ञे-

तच्छास्त्रम् । परस्वं नाददीतेत्यादिकमिति चेत् स्वत्वाप्रतीतौ कथं तत्प्रवृत्तिः । तस्मात् स्वत्वमतिरिक्तमेव । प्रमाणं च तत्र परस्वं नाददीतेत्यादिकं शास्त्रमेव । तच्च प्रतिग्रहोपादानक्रय-

यत्वमित्याशयेन पृच्छति । किं तदिति । परकीयान्नादिभक्षणनिषेधबोधकमित्यर्थः । तस्य उपदर्शितशास्त्रस्य । प्रवृत्तिः परकीयस्वत्वाश्रयादाननिषेधबोधकत्वम् । तथा च स्वत्वज्ञाने सति तथाविधशास्त्रादुपदर्शितनिषेधबोधः । शास्त्रात् तथाविधनिषेधबोधे सति शास्त्रबोधिततथाविधनिषेधप्रतियोगित्वरूपोपदर्शितनिषिद्धत्वादिघटितोपदर्शितस्वत्वज्ञानमित्यन्योन्याश्रय इति भावः । इदमुपलक्षणम् । योग्यत्वस्य निर्वचनाशक्यतयापि तद्घटितलक्षणमनुपपन्नमित्यादि द्रष्टव्यम् । उपसंहरति । तस्मादिति । क्लृप्तमध्ये निवेशासम्भवादित्यर्थः । न च यथेष्टविनियोगोपायक्रयादिविषयत्वमेव तदस्तु किं तत्रातिरिक्तत्वकल्पनेनेति वाच्यम् । तादृशविषयताया धनस्वरूपत्वे क्रयपूर्वकालेपि तदीयस्वत्वव्यवहारप्रसङ्गात् । क्रयस्वरूपत्वे तु क्रयनाशक्षणे तदीयस्वत्वनाशप्रसङ्गात् अतिरिक्तत्वे तु अस्माकं समीहितस्य सिद्धत्वादिति । ननु सर्वमिदं सम्भवति स्वत्वे प्रमाणसद्भावे तत्तु न पश्याम इत्यत आह । प्रमाणं चेत्यादि । परस्वं नाददीतेत्यादि । शास्त्रस्य निषेधप्रतियोगितावच्छेदकघटकत्वेन स्वत्वस्य प्रमितिजनकत्वात् स्वत्वप्रमाणत्वमित्यर्थः । तच्चेति । अतिरिक्तस्वत्वं चेत्यर्थः । प्रतिग्रहः दानजन्यपरस्वत्वनाशानन्तरोत्पन्नस्व-

ग्रापित्रादिमरणैर्जन्यते[1] दानादिभिश्च नाश्य-
ते। कारणानामेकशक्तिमत्त्वात् कार्याणां वैजा-
त्याद्वा कार्यकारणभावनिर्वाह इति दिक् ॥

स्वत्वसम्पादकं ग्रहणमुपादानम् अस्वामिकारण्यस्थस्य का-
शकुशादेरानयनम्। दानादिभिरिति। आदिपदग्राह्यो
विक्रयादिः। ननु स्वत्वोत्पत्तिं प्रति प्रतिग्रहादीनां
समुदितानां न हेतुत्वम्। तथाविधसमुदितघटकैकसत्त्वे
स्वत्वोत्पत्त्या व्यभिचारात्। नापि प्रत्येकं तेषां तत्र
हेतुत्वम्। परस्परं विना परस्परकारणात् स्वत्वोत्पत्त्या
तद्दोषतादवस्थ्यात्। एवं स्वत्वनाशं प्रति दानादीनां हेतु-
त्वेपि विभावनीयमित्यत आह। कारणानामेकशक्ति-
मत्त्वादिति। स्वत्वादिकं प्रत्येकशक्तिमत्त्वेन तत्र
तेषां हेतुत्वाभ्युपगमादित्यर्थः। शक्त्यनङ्गीकारे त्वाह।
कार्याणामित्यादि। तत्तद्विजातीयस्वत्वरूपकार्यं
प्रति प्रत्येकं प्रतिग्रहादीनां हेतुत्वाभ्युपगमादित्यर्थः।
कार्यकारणभावनिर्वाहः स्वत्वादीनांप्रतिग्रहादीनां निर्दुष्टः
कार्यकारणभावः। केचित्तु स्वत्वं नातिरिक्तं किं तु
क्वचिद्विक्रयप्रागभावविशिष्टक्रयविनाशः क्वचिद्दानादिप्रा-
गभावविशिष्टप्रतिग्रहादिध्वंसः क्वचिद्विक्रयप्रागभाववि-
शिष्टपित्रादिध्वंसः स्वत्वम्। न चैवं सति स्वत्वमित्याका-
रकानुगतव्यवहारानुपपत्तिः। तत्रेष्टापत्तौ क्षतिविरहात्।

(१) तच्च प्रतिग्रहोपादानपित्रादिमरणजन्यं—पा॰ ३ पु॰।

एवं शक्तिरप्यतिरिच्यते । तृणारणिमण्या-दिस्थले जातित्रयकल्पनामपेक्ष्य तत्तत्सम्बन्धानामेकशक्तिमत्त्वेन कारणत्वकल्पनाया एव लघु-

अतिरिक्तस्वत्ववादिनामपि तथाविधव्यवहारोपपत्तये अतिरिक्तस्वत्वत्वाङ्गीकारस्यावश्यकतया मन्मतेप्यतिरिक्तत्न्मात्राभ्युपगमेनानुगतव्यवहारसम्भवाच्च । अतिरिक्तस्वत्ववादिमते स्वत्वत्वं नातिरिच्यते इति तु नाशङ्कनीयम् अधिकरणभेदेन स्वत्वभेदाङ्गीकारस्यावश्यकत्वात् । अन्यथा एकद्रव्यविक्रयादिना सर्वत्र स्वत्वनाशप्रसङ्गादिति वदन्ति । तद्धेयम् प्रागभावे मानाभावेन तथा वक्तुमशक्यत्वात् ॥

वह्नित्वावच्छिन्नं प्रति तृणारणिमण्यादीनां न तृणत्वादिना हेतुत्वं व्यभिचारात्[१] किं तु तत्सम्बन्धेनैकामतिरिक्तशक्तिमभ्युपेत्य एकशक्तिमत्त्वेनैव तत्र तेषां सम्बन्धानां हेतुत्वमिति मीमांसकमतमवलम्ब्याह । एवमिति । शक्तिरपीति । वह्निजनकतावच्छेदकत्वेन तृणादिसम्बन्धेष्वतिरिक्तशक्तिरभ्युपेयते इत्यर्थः । ननु तृणादिजन्यतावच्छेदकत्वेन वह्निनिष्ठजातित्रयं स्वीकृत्य तथाविधजातित्रयावच्छिन्नं प्रति तृणादीनां तृणत्वादिना हेतुतात्रयकल्पनेनैवोपपत्तौ किमतिरिक्तशक्तिकल्पनेनेत्याशङ्कां निरसितुमाह । तृणादिस्थल इत्यादि । तथा च तादृशजातित्रयमभ्युपेत्य कार्यकारणभावत्रयाभ्युपगमे गौरवात् तदपेक्षयैकामतिरिक्तामभ्युपेत्यैकशक्तिमत्त्वेन तत्रैककार्य-

(१) गौरवात्-पा० २ पु० ।

त्वेन न्याय्यत्वात्। सम्बन्धत्रितयनिष्ठैकजात्यङ्गीकारे च नोदनत्वादिना जातिसङ्करप्रसङ्गः। यदि चान्वयव्यतिरेकाभ्यां तृणादेरपि कारणत्वमिष्यते तदा तेषामप्येकशक्तिमत्त्वेन तदस्तु तथापि जातित्रयकल्पनामपेक्ष्य शक्तिद्वयकल्पनैव लाघवेन ज्यायसीति। तेष्वपि चैकजात्यङ्गीकारे मणित्वादिना सङ्करप्रसङ्गः॥

कारणभावकल्पने लाघवस्यातिस्फुटत्वादिति भावः। ननु यादृशसम्बन्धत्रयेष्वेकां शक्तिं कल्पयित्वा तत्र तादृशजातिमत्त्वेनैकहेतुताकल्पनोपपत्तौ लाघवाभावाच्चातिरिक्तशक्तिकल्पनमनर्थकमित्यत आह। सम्बन्धत्रितयेत्यादि। जातिसङ्करप्रसङ्ग इति। नोदनत्वाभाववति तादृशी जातिरभिघाताख्यतादृशसंयोगे तादृशवैजात्याभाववति रथादिनोदनाख्यसंयोगे नोदनत्वजातिः। एकत्र तादृशनोदनाख्यसंयोगे च तादृशजातिद्वयसमावेश इति साङ्कर्यमिति तेषु जात्यङ्गीकारोऽशक्य इति भावः। यदि चेति। वस्तुतस्तथाविधान्वयव्यतिरेकानुविधाने मानाभाव इति भावः। तेषामपीति। तृणादीनामपीत्यर्थः। मणित्वादिनेति। आदिना तेजस्त्वादिपरिग्रहः। सङ्करस्तु स्पष्टतया नोपपादित इति। अत्रेदमवधेयम्। तृणादिसम्बन्धानामेकशक्तिमत्त्वेन तत्र हेतुत्वे फूत्काराभावदशायां वह्नित्वावच्छिन्नापत्तिः। न च फूत्कारादीनामपि

पदजन्यधर्मिककोटिद्वयतदुभयविरोधि-

सहकारित्वकल्पनान्नानुपपत्तिरिति वाच्यम् । तथाप्यरणि-सम्बन्धसत्त्वे फूत्कारसत्त्वे मन्थनाद्यसत्त्वे वह्नित्वावच्छिन्नोत्पत्त्यापत्तेः । तादृशजातित्रयमभ्युपेत्य प्रत्येकं तादृशजातित्रयावच्छिन्नं प्रति प्रत्येकतृणादीनां तृणत्वादिना हेतुतात्रयकल्पने तु नैवानुपपत्तिः । तृणत्वावच्छिन्नेन फलजनने एव फूत्कारस्य सहकारित्वाभ्युपगमात् । न च फूत्कारादिसम्बन्धानामप्येकशक्तिमत्त्वेनैव तत्र हेतुत्वे अरणिसम्बन्धकालीनफूत्कारादिसम्बन्धे तादृशशक्त्यनभ्युपगमेन न तदवच्छिन्नस्य सहकारित्वाभ्युपगमे उपदर्शितापत्तिरिति वाच्यम् । तथा सति तृणादिसम्बन्धानामेकशक्तिमत्त्वेन हेतुत्वे मानाभावः । तृणादिसम्बन्धाभावकालीनफूत्कारादिसम्बन्धेन तादृशशक्त्यनभ्युपगमात् तेनैवापत्तिवारणसम्भवात् । यदि च विनिगमनाविरहेण तादृशोभयरूपेण हेतुत्वमिति विभाव्यते तदा तृणादिसम्बन्धकालीनवायुसंयोगादीनामप्येकशक्तिमत्त्वे नहेतुतामादाय विनिगमनाविरहो दुर्वार इति । तस्माज्जातित्रयमभ्युपेत्य तथाविधकार्यकारणभावकल्पनमेव निराबाधसरणिमादधातीति सारम् ॥

शब्दो नित्यो नवेत्यादिविप्रतिपत्तिवाक्येभ्यः शब्दादिधर्मिण उपस्थितिः नित्यत्वनित्यत्वाभावकोटिद्वयोपस्थितिश्च तदनन्तरं विरोधभासकसामग्रीसहकृतेभ्यस्तदुपनायकज्ञानेभ्यः शब्दो नित्यो न वेत्यादिमानससंशयः न तु तत्र शाब्दात्मकः संशयो जायते परोक्षज्ञानं निश्चय एवेति सिद्धान्तविरोधात् । एवं च संशयप्रयोजकं वाक्यविप्रतिपत्तिरिति प्राञ्चः । तन्मतं दूषयति । पदजन्येत्यादि । तथाविधविप्रतिपत्तिवाक्यस्थात् शब्दादि

पदाच्छब्दादिरूपधर्म्युपस्थितिस्तद्घटकीभूतनित्यादिपदनञ्पदाभ्यां नित्यत्वनित्यत्वाभावादिरूपकोटिद्वयोपस्थितिस्तद्घटकीभूतवाकाराद्विरोधोपस्थितिस्तदनन्तरं संशयात्मकयोग्यताज्ञानसहिताच्छब्दो नित्यो न वेत्यादिवाक्यात् प्रथमत एव शब्दो नित्यो न वेति शाब्दसंशय इति पदजन्येत्यारभ्य संशय इत्यन्तग्रन्थस्यार्थः । ननु संशये तदधिकरणावृत्तित्वरूपविरोधो न प्रकारस्तथासति तदभावव्याप्यवत्ताज्ञानरूपसंशयप्रतिबन्धकस्य कार्यकाले सत्त्वात् संशयस्य दुर्घटत्वापतेः किं तु संशये विरोधः संसर्गविधया भासते तस्य तु पूर्वमुपस्थितिर्नापेक्षितेति विरोधज्ञानस्य संशयहेतुत्वोत्कीर्तनमसगङ्गतमेवेति चेन्न । तद्वत्ताबुद्धिं प्रति तदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वमेकं तदभावव्याप्तिप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताशालिनिर्णयविशिष्टतद्धर्मावच्छिन्नकारताशालिनिर्णयत्वेन पुरुषत्वव्याप्यकरादिमांश्चायमितिज्ञानद्वयादपि पुरुषत्वसन्देहनिवृत्तेः । अपरं च तदभावव्याप्त्यतिरिक्तनिष्ठप्रकारत्वानिरूपितप्रकारताशालिनिर्णयत्वेन पुरुषत्वव्याप्यवानयमिति ज्ञानादपि पुरुषत्वसन्देहनिवृत्तेः । एवं च संशये कोट्यंशे विरोधकोटितावच्छेदकयोरेकत्र द्वयमितिरीत्या भानोपगमात् । तस्योपदर्शितप्रतिबन्धकतावच्छेदकद्वयान्यतरानाक्रान्तत्वेनोक्तानुपपत्तेरभावादिति दिक् । तथा च परोक्षज्ञानं निश्चयात्मकमेवेति जीर्णसिद्धान्तो युक्त्यभावादश्रद्धेयः । अन्यथोभयकोटिविषयकशाब्दसामग्रीकाले संशयाकारशाब्दबोधवारणायैककोटिविषयक-

**ज्ञानसंशयात्मकयोग्यताज्ञानसहितात् शब्दादाहत्यैव संशयः। समानानेकेत्यादिसूत्रं प्रमाण-**

शाब्दबुद्धिं प्रति अपरकोटिविषयकशाब्दसामग्र्याः प्रतिबन्धकत्वकल्पने गौरवापत्तिरिति भावः। वस्तुगत्या तथाविधसिद्धान्तोपि नास्तीत्येतदर्थं संशयात्मकशाब्दबोधे महर्षेः संवादमाह(१)। **समानानेकेत्यादि**। समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षो विमर्षः संशय इति सूत्रे संशयहेतुत्वेन विप्रतिपत्तिवाक्यस्योल्लेखं कुर्वतो महर्षेरपि संशयात्मकं शाब्दज्ञानमभिमतमिति समुदित(सूत्रे संशयहेतु) ग्रन्थार्थः(२)। सूत्रार्थस्तु समानोऽनेकेषां तत्कोटितदभावकोटिमतां यो धर्मस्तदुपपत्तेधर्मिणि तद्वत्ताज्ञानाद्विप्रतिपत्तेर्विरुद्धकोटिद्वयप्रतिपादकाच्छब्दो नित्यो नवेत्यादिवाक्यादुपलब्धिरनुपलब्धिश्च तत्कोटेः तथा च या तत्कोटेरुपलब्धिर्या च नञ्व्यत्यासेन तदभावकोटेरुपलब्धिस्तयोर्याऽव्यवस्थाऽव्यवस्थापकोऽनिश्चायक इति यावत् तस्मात् सपक्षविपक्षव्यावृत्तधर्मवत्ताज्ञानरूपासाधारणधर्मवद्धर्मिज्ञानादित्यर्थः। विशिष्यते व्यावर्त्यते विशेषदर्शनविषयो यस्मात् स विशेषो विशेषादर्शनं तत्सापेक्ष इत्यर्थः। एतावता कारणमुक्त्वा लक्षणमाह। **विमर्ष इति**। एकधर्मिकविरुद्धोभयप्रकारकज्ञानमित्यर्थः। भाष्यकारस्तु समानानेकधर्मेत्यादौ समानः कोटिद्वयसहचरितधर्मः अनेकधर्मोऽसाधारणधर्मः उपलब्ध्यनुपलब्ध्यव्यवस्था तत्कोटिज्ञानस्य तदभावकोटिज्ञानस्य वा सविषयकत्वानवधारणं प्रामाण्यसंशय इति यावत्। विशेषापेक्षार्थस्तु पूर्वोक्त एव।

(१) सम्मतिमाह–पा० २ पु०।
(२) ( ) एतन्मध्यस्थो नास्ति २ पु०।

यतो महर्षैरपि सम्मतमिदम्। एकधर्मिकनाना-विरुद्धधर्मप्रकारकज्ञानत्वरूपं कोटिद्वयविरो-धिज्ञानसामग्रीसमाजाधीनं च संशयत्वं नील-घटत्ववन्न कार्यतावच्छेदकम्। एवं संशयत्व-शून्यज्ञानत्वरूपनिश्चयत्वमपि नीलत्वशून्य-

एतावता कारणमुखेन संशयविशेषलक्षणमुक्तं विमर्ष इत्य-नेन एकधर्मिकविरुद्धोभयप्रकारकज्ञानत्वरूपं संशयसामा-न्यलक्षण मुक्तमित्याहुः। यथा नीलत्वावच्छिन्नसामग्रीघ-टत्वावच्छिन्नसामग्रीभ्यां तदुभयधर्मावच्छिन्ने जायमाने ऽर्थवशसम्पन्ना नीलघटत्वाछच्छिन्नोत्पत्तिरतो नीलघटत्वं न कार्यतावच्छेदकं तथा एकधर्मिकविरुद्धतत्तदभावज्ञान-सामग्री(१)भ्यां तद्धर्मिकविरुद्धतत्प्रकारकज्ञानत्वतद्धर्मिक-विरुद्धतदभावप्रकारकज्ञानत्वोभयावच्छिन्ने जायमाने ए-कैकधर्मिकविरुद्धतत्तदभावोभयप्रकारकज्ञानत्वरूपसंशय-त्वावच्छिन्नोत्पत्तिरपि अर्थवशसम्पन्ना भविष्यतीति तथा-विधसंशयत्वमपि न कस्यचित्कार्यतावच्छेदकं मानाभावा-दित्याह एकधर्मिकेत्यादि। समानं मिलनम्। तथा च संशयत्वावच्छिन्नं प्रति धर्मिज्ञानादीनां हेतुत्वमभ्युपग-च्छतां प्राचीनानां मतमनुपादेयमिति भावः। एवमिति। संशयत्ववदित्यर्थः। संशयत्वशून्यज्ञानत्वरूपे-ति। तद्धर्मिविशेष्यतानिरूपिततदभावप्रकारताशून्यत्वे सति तद्धर्मिविशेष्यतानिरूपिततत्प्रकारताशालिज्ञानत्व-

(१) विरुद्धोभयज्ञानसामग्री—पा॰ २ पु॰।

घटत्ववत्तथेति ॥

कारणत्वं च पदार्थान्तरम्। तच्च कार्यभेदा-

रूपमित्यर्थः । नीलत्वशून्यघटत्ववदिति । यथा नीलोत्पादकसामग्र्यभावदशायां घटोत्पादकसामग्रीबलात् घटत्वावच्छिन्ने जायमाने नीलत्वशून्यघटत्वावच्छिन्नस्योत्पत्तिरर्थसिद्धेति तन्न कार्यतावच्छेदकं प्रमाणाभावात् । तथा तदभावप्रकारकज्ञानोत्पादकसामग्र्यभावदशायां तत्प्रकारकज्ञानत्वावच्छिन्ने जायमाने तथाविधनिश्चयत्वावच्छिन्नोत्पत्तेरप्यर्थतो निर्वाहे तथाविधनिश्चयत्वमपि न कार्यतावच्छेदकं प्रमाणाभावादिति भावः । नन्वेवं सति स्वसामानाधिकरण्यकालिकविशेषणतोभयसम्बन्धावच्छिन्नदुरितनिष्ठप्रतियोगितावच्छेदकताकभेदवद्दुरितध्वंसत्वमपि तत्त्वज्ञानकार्यतावच्छेदकं मास्तु आर्थसमाजग्रस्तत्वादिति चेन्न । आर्थसमाजग्रस्तधर्मस्य कार्यतानवच्छेदकत्वे प्रमाणाभाव एव बीजम् । प्रकृते तु तथाविधकार्यकारणभावग्राहकतमेवेत्यादिवेदराशेर्जागरूकतया तथा वक्तुमशक्यत्वादिति ॥

ननु कारणत्वं नानन्यथासिद्धत्वे सति कार्यनियतत्वपूर्वकालवृत्तित्वम् एतद्धटत्वावच्छिन्नं प्रति देशान्तरीयरासभादेरपि हेतुत्वापत्तेः(१) । नापि कार्याव्यवहितपूर्वक्षणावच्छिन्नकार्याधिकरणवृत्तित्वविशिष्टस्याभावस्य प्रतियोगितानवच्छेदकीभूतो यो धर्मस्तद्वत्त्वं कारणत्वं विषयतासम्बन्धेनेच्छां प्रति विषयतासम्बन्धेन ज्ञानस्य हेतुत्वानुपपत्तेः । अवच्छेद्याधिकरणासम्बद्धक्षणस्याव-

(१) कारणत्वापत्तेः—पा० २ पु० ।

च्छेदकत्वाभावेन इच्छाव्यवहितपूर्वक्षणावच्छिन्नस्य विषयतासम्बन्धेनेच्छाधिकरणीभूतो योऽनागतपाकस्तद्वृत्तित्वस्याभावेऽप्रसिद्धा तथाविधकारणत्वस्य तत्रासम्भवात्। अथ कार्याव्यवहितपूर्वक्षणावच्छिन्नकार्यसमानाधिकरणवृत्तित्वविशिष्टस्य सामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य प्रतियोगितानवच्छेदकीभूतो योऽन्यथासिद्धनिरूपकीभूतो धर्मस्तद्वत्त्वम्। अन्यथासिद्धनिरूपकत्वं च यद्धर्मावच्छिन्नं प्रति तद्धर्मावच्छिन्नव्यापकतावच्छेदकीभूतयद्धर्मावच्छिन्ने (व्यापकतावच्छेदकीभूतयद्धर्मावच्छिन्नेन) प्राणिकानां कारणत्वव्यवहारस्तत्तद्व्यक्तिभेदकूटवत्त्वं न तु प्रसिद्धान्यथासिद्धिपञ्चकानिरूपकत्वं तत तथा सति उत्तरसंयोगं प्रति विभागस्य हेतुत्वापत्तेः। अन्यथासिद्धिपञ्चकं तु यथा। अन्यं प्रति पूर्ववर्तित्वे ज्ञाते एव यस्य यं प्रति पूर्ववर्त्तिताग्रहस्तस्य तं प्रति अन्यथासिद्धत्वम् यथा ज्ञानं प्रति शब्दसमवायिकारणत्वेन आकाश अन्यथा सिद्धः। एवं कारणान्तरेण सह यस्य यं प्रति पूर्ववर्तिताग्रहस्तस्य तं प्रति अन्यथासिद्धत्वम्। यथा घटं प्रति दण्डविशिष्टचक्रमन्यथासिद्धम्। एवमन्यत्र क्लृप्तनियतपूर्ववर्तिन एव कार्यसम्भवे तत्कार्यं प्रति तत्कारणसहभूतमन्यथासिद्धम्। यथा पाकजरूपं प्रति गन्धप्रागभावः अन्यथासिद्धः एवमगुरुव्याप्यधर्मेण यस्य यं प्रति कारणत्वं सम्भवति तस्य तं प्रति गुरुव्यापकधर्मेण अन्यथासिद्धत्वम् यथा घटं प्रति द्रव्यत्वेन दण्डो ऽन्यथासिद्धः। एवं यद्धर्मावच्छिन्नजनकतावच्छेदकीभूतो यो धर्मः सोऽपि तत्रान्यथासिद्धः। यथा घटत्वावच्छिन्नं प्रति दण्डत्वमन्यथासिद्धमिति। विभागत्वावच्छिन्ने निरुक्तान्यथासिद्धिमध्ये कस्याप्यसत्त्वात्। एवं प्रतिबन्धकाभावस्य तत्तद्व्यक्तित्वेन हेतुत्वापत्तेश्च। तत्तद्व्यक्तित्वविशि-

दवच्छेदकभेदाञ्च भिद्यते कारणत्वत्वेनाखण्डो-

षृ प्रसिद्धान्यथासिद्धिपञ्चकाभावात् । अत एव कारणे ऽन्यथासिद्धभिन्नत्वविशेषणं त्यक्त्वा निरुक्तधर्मे तदनिरूपकत्वविशेषणदानम् । अन्यथा प्रतिबन्धकाभावस्यापि प्रतिबन्धकतावच्छेदकीभूतधर्मावच्छिन्नाभावत्वेन हेतुत्वस्य सर्वसंमतस्याभावापत्तेरिति चेन्न तावद्भेदकूटविशिष्टज्ञानस्यावश्यकतया ईदृशकारणत्वस्यासर्वज्ञापरिच्छेद्यत्वापत्तेः । न च स्वाव्यवहितपूर्वक्षणावच्छिन्नस्वाधिकरणवृत्तित्वविशिष्टाभावप्रतियोगितानवच्छेदकत्वविशिष्टतद्व्यक्तिभेदकूटवत्त्वसम्बन्धेन कार्यविशिष्टो यो धर्मस्तद्वत्त्वं कारणत्वं तत्र च नोक्तदोषः सम्बन्धस्य ज्ञातस्यैव विशिष्टबुद्धिविषयत्वादिति वाच्यम् । तस्य सम्बन्धत्वसन्देहेन तथा वक्तुमशक्यत्वादित्यत आह । **कारणत्वं चेति । पदार्थान्तरमिति ।** तथाविधनियतपूर्ववर्तित्वाद्यतिरिक्तमित्यर्थः । तस्य सर्वत्रैकत्वे दण्डनिष्ठकारणता न पटनिरूपिता दण्डत्वावच्छिन्नकारणता न चक्रत्वावच्छिन्नेत्याद्याकारकप्रतीत्यनुपपत्तिरित्यत आह । **तच्चेति ।** कारणत्वं चेत्यर्थः । **अवच्छेदकभेदादिति ।** कारणतावच्छेदकभेदादित्यर्थः । नन्वेवं सति कारणं कारणमित्याकारकानुगतप्रतीत्यनुपपत्तिरेवमनुगतकारणपदशक्यतावच्छेदकानुपपत्तिश्चेत्यत आह । **कारणत्वत्वेनेति ।** तत्र कारणत्वम् । तथा च कारणत्वत्वरूपानुगतधर्ममादाय तथाविधानुगतप्रातीत्याद्युपपत्तिरिस्ति भावः । अत्रेदं तत्त्वम् । कारणत्वं नातिरिक्तं किन्तुकारणतावच्छेदकस्वरूपम् । न चैवं सत्यभेदे अवच्छेद्यावच्छेदकभावानुपपत्तिरिति वा-

पाधिनानुगतं च तत्तत्कारणपदशक्यतावच्छेदकम्। ग्राहकं च तस्य क्वचिदन्वयव्यतिरेकदर्शनसहकृतं प्रत्यक्षम् क्वचिदनुमानं क्वचिदागमादिकम् ॥

एतेन कार्यत्वं व्याख्यातम् ॥

कारणत्वप्रतियोगिकत्वमेव कार्यत्वमिति चेत्। कार्यत्वप्रतियोगित्वमेव कारणत्वमिति किं न रोचयेः। तस्मात् कार्यत्वं कारणत्वं चोभयमेवातिरिक्तं भिन्नं चेति कृतं पल्लवितेनेति ॥

---

च्यम्। एकरूपेण तदनभ्युपपगमात्। अत्र तु कारणतात्वेनावच्छेद्यायाः कारणताया अवच्छेदकत्वस्य स्वरूपतो दण्डत्वेऽभ्युपगमे क्षतिविरहादतिरिक्तकारणत्वत्वस्य सर्वैरङ्गीकारादिति। तस्येति। कारणत्वस्येत्यर्थः। आगमादिकमिति। वेदादिकमित्यर्थः ॥

एतेनेति। कृप्तान्तर्भावेनानिर्वाहेणेत्यर्थः(१)। व्याख्यातम्। अतिरिक्तत्वेन व्याख्यातम् ॥

शङ्कते। कारणत्वेत्यादि। किं न रोचय इति। तस्मादिति। विनिगमनाविरहादित्यर्थः। भिन्नमिति। परस्परं भिन्नमित्यर्थः ॥

(१) कृप्तान्तर्भावानिर्वाहेणेत्यर्थः—पा० २ पु०।

संख्या च पदार्थान्तरं न तु गुणः गुणादिष्वपि तद्वत्त्वप्रत्ययात्[1]। न चासौ भ्रमः बाधकाभावात् । एकार्थसमवायप्रत्यासत्त्या तथाप्रत्यय इति चेत् । न विलक्षणाभ्यां समवायैकार्थसमवायाभ्यामविलक्षणायास्तद्वत्ताप्रतीतेरयोगात् । घटत्वादौ चैकार्थसमवायादेकत्वप्रत्ययवत् द्वित्वाद्येकार्थसमवायाद्द्वित्वादिप्रत्ययप्रसङ्गः रूपत्वादौ च न तत्सम्भवः ॥

तद्वत्त्वप्रत्ययात् । एकं रूपं द्वे रूपे इत्याकारकसंख्यावत्त्वप्रत्ययात् । तथा च संख्याया गुणत्वे रूपादिगुणे तथाप्रत्ययानुपपत्तेः । गुणे गुणानङ्गीकारादिति भावः । असाविति । रूपादौ संख्यावत्त्वप्रत्यय इत्यर्थः। बाधकाभावादिति । तथा च बाधकाभावे ऽपि भ्रमत्वाङ्गीकारे प्रतीतिबलात् पदार्थमात्रसिद्धिविलोपप्रसङ्गः। सर्वत्र प्रतीतेस्तथावक्तुमशक्यत्वादिति भावः । एकार्थेति । स्वाश्रयसमवेतत्वप्रत्यासत्त्येत्यर्थः । अविलक्षणायास्तद्वत्त्वप्रतीतेरित्यादि । अविलक्षणसम्बन्धविषयकत्वेनानुभवसिद्धायाः संख्यावत्त्वप्रतीतेरसम्भवादित्यर्थः। ननु तथाविधानुभवे मानाभाव इत्यत आह । घटत्वादौ चेति । द्वित्वादीति । घटत्वद्वयमितिप्रत्ययप्रसङ्गादित्यर्थः । तथा चैकार्थसमवायो न विशिष्टबु-

(१) तद्वत्ताप्रत्ययात्–पा॰ २ पु. ।

समवायोऽपि च नैको जलादेर्गन्धादिमत्त्वप्रसङ्गात् परं तु नानैव समवायत्वं तु पुनरनुगतमखण्डोपाधिरिति ॥

वैशिष्ट्यमपि पदार्थान्तरम् । रूपादिप्रतीतिनिमित्ततया समवायस्येवाभाववत्ताप्रतीतिनिमित्ततया तस्यापि सिद्धेः । स्वरूपसम्बन्धवि-

---

द्धिनियामक इति भावः । तत्सम्भव इति । तथा च स्वाश्रयसमवेतत्वसम्बन्धेनैकत्वादिप्रत्यय सम्भव इत्यर्थः । रूपादौ एकत्वादिसंख्याया अभावेन तथाऽसम्भवादिति भावः ॥

समवायस्यैकत्वे बाधकमाह । जलादावित्यादि । पृथिव्यां गन्धसमवायस्य जलनिष्ठस्नेहसमवायस्याभिन्नतया जलादावपि गन्धसमवायसत्त्वात् तत्र गन्धवत्ताप्रतीतिदुर्वारैवेति भावः । न च जले गन्धनिरूपितत्वविशिष्टसमवायाभावान्न गन्धवत्ताप्रतीतिरिति वाच्यम् । विशिष्टस्यातिरिक्तत्वाभावेन जलेऽपि तत्सत्त्वात् तथाविधविशिष्टनिरूपिताधिकरणताया अतिरिक्तत्वे किमपराद्धं विभिन्नसमवायैरिति ॥

वैशिष्ट्यमपीति । विशेषणताविशेषोपीत्यर्थः । निमित्ततया । विषयतया । तस्यापि । अतिरिक्तविशेषणत्वस्यापि । ननु तादृशप्रतीतेः स्वरूपसम्बन्ध एव विषय इत्याशङ्कते । स्वरूपसम्बन्धेत्यादि । तत्तदधि-

शेष एव तथाप्रतीतिनिमित्तमिति चेन्न समवायोच्छेदप्रसङ्गात् । तत्रापि स्वरूपसम्बन्धविशेषस्य निमित्ततायाः सुवचत्वात् ॥

करणादिस्वरूपसम्बन्ध इत्यर्थः । तथाप्रतीतिनिमित्तमिति । अभाववत्ताप्रतीतिविषय इत्यर्थः । तत्रापि रूपवत्ताप्रतीतावपि । स्वरूपसम्बन्धविशेषस्य तत्तदधिकरणस्वरूपसम्बन्धविशेषस्य । निमित्ततायाः । विषयतायाः । तथा च समवायमनङ्गीकृत्य यदि घटपटादिरूपस्वरूपसम्बन्धस्य संयोगादिसम्बन्धत्वाभ्युपगमस्तदा घटपटौ मिथः संयुक्तावित्यादिप्रतीतेस्तत्तदधिकरणे सांसर्गिकविषयताभ्युपगमे गौरवम् । यदि च संयोगस्य स्वरूपसम्बन्धः संयोग एव तदा संयोगेन संयोगो वर्तते इत्यपि प्रत्ययः स्यादिति अतिरिक्तसमवाय आवश्यकः । न चातिरिक्तसमवायस्वीकारे तुल्ययुक्तया तद्वैशिष्ट्यस्याप्यतिरिक्तस्य स्वीकारादुभयकल्पने गौरवात् तदपेक्षयातिरिक्तवैशिष्ट्याख्यस्वरूपसम्बन्ध एव संयोगादिसम्बन्धत्वाभ्युपगम उचित इति वाच्यम् । उपदर्शितयुक्त्या विनिगमनाविरहेणैकसमवायसिद्धौ पश्चात्तद्वैशिष्ट्याख्यसम्बन्धविशेषकल्पनस्य फलमुखत्वेनादोषत्वात् । वैशिष्ट्याख्यसम्बन्धस्तु वैशिष्ट्याख्यरूप एवेति नानवस्थेति यदि विभाव्यते तदा तुल्ययुक्त्याभावस्यातिरिक्तवैशिष्ट्यसम्बन्धस्वीकारोऽप्यावश्यकः । अभावस्याभावसम्बन्धत्वाभ्युपगमे ऽभावाधिकरणवृत्त्यखण्डभेदतावन्मात्रविषयकज्ञानादिकमादाय विनिगमनाविरहापत्तेः । न चाभावस्यातिरिक्तसम्बन्धस्वीकारेपि तादृशविनिगमनाविरहो दुर्वार

 

एतेन ज्ञानादिविषयता व्याख्याता ॥

नानुपमृद्य प्रादुर्भावादिति सूत्रम् अनुपमृद्य प्रादुर्भावादिति तदर्थः गुरूणां नये न कलञ्जं भक्षयेदिति कलञ्जभक्षणाभावविषयककार्यमित्यर्थः। एतेनैतादृशोप्यन्वयः स्थलविशेषे व्युत्पत्तिसिद्ध इति मन्तव्यम् ॥

---

इति वाच्यम्। क्लृप्तेनाक्लृप्तस्य विनिगमनाविरहासम्भवादिति भावः ॥

एतेन। क्लृप्तान्तर्भावासम्भवेन। व्याख्याता। अतिरिक्तत्वेन व्याख्याता। अयं भावः। विषयतायाः ज्ञानस्वरूपत्वे घटपटाविति समूहालम्बनस्य भ्रमत्वापत्तिः। तत्र तदुभयविषयतायाः एकज्ञानस्वरूपत्वेन घटत्वाद्यवच्छिन्नघटत्वाद्यभाववद्वृत्तिविषयताप्रतियोगित्वरूपभ्रमत्वसत्त्वात् विषयतायाः विषयस्वरूपत्वे तु घटभूतलसंयोगाविति समूहालम्बनतो घटवद्भूतलमिति विशिष्टबुद्धेरवैलक्षण्यापत्तेः। न च समूहालम्बनेऽधिकस्य संयोगत्वस्य भानत्वान्नतथेति वाच्यम्। तथा सति घटवद्भूतलसंयोगश्चेतिज्ञानात् तादृशसमूहालम्बनवैलक्षण्यानिर्वाहात्। न च विशिष्टबुद्धौ सम्बन्धसम्बन्धोप्यधिको भासते इति नानुपपत्तिरिति वाच्यम्। सम्बन्धसम्बन्धमादायापि समूहालम्बनसम्भवादिति। अधिकं विषयताविचारे ऽनुसन्धेयमिति संक्षेपः ॥

अर्थानां युक्तिसिद्धानां मदुक्तानां प्रयत्नतः ।
सर्वदर्शनसिद्धान्तविरोधेनैव दर्शनम् ॥
अर्था निरुक्ताः सिद्धान्तविरोधेनैव पण्डिताः ।
विना विचारं न त्याज्या विचारयत यत्नतः ॥
सर्वशास्त्रार्थतत्त्वज्ञान् नत्वानत्वा भवादृशान् ।
इदं याचे मदुक्तानि विचारयत सादरम्[(१)] ॥
रीतिरेषापकृष्टापि सेविता पूर्वपण्डितैः ।
यन्निजोक्तिविचाराय याचते विदुषोपरान् ॥[(२)]

अर्थानामित्यादि । ननु अप्रयोजका एव त्वदर्था इत्यत आह । युक्तिसिद्धानामिति । मदुक्तानां । नान्येनोक्तानाम् । दर्शनं शास्त्रम् । भावादृशान् । पण्डितान् । एषा पूर्वश्लोकोक्ता । पूर्वपण्डितैः । वाचस्पतिमिश्रादिभिः । अपरानिति । पण्डितानित्यर्थः ॥

पदार्थखण्डनाकूतपुरुहूतपुरोहितम् ।
शिरोमणिमहं वन्दे शिरोमणिमिवाद्भुतम् ॥
श्रीमद्दीधितिकारकल्पितघटीकोलाहलव्याकुले
मार्गे सञ्चरणाय यन्निगदितं सिद्धान्तसिद्धेतरत् ।
दैवात् तेन भवेद्यदीह सहसा प्रौढापराधो मम
क्षन्तव्यः कृतिभिः श्रुतो यदि भवेद्यत्नानुरूपो बलिः ॥

(१) सादृतः—पा० १ पु० ।
(२) शिरोमणिकृतं रत्नं पदार्थानां हि खण्डनम् ।
विद्वज्जनैः सदा धार्यं मौलेर्दिव्यप्रकाशकम् ॥
इत्यधिकं २ पुस्तके वर्तते ।

इति महामहोपाध्यायतार्किकशिरोमणि-श्रीरघुनाथभट्टाचार्यविरचितं पदार्थतत्त्वनिरूपणं समाप्तम्(१) ॥

इति श्रीरघुदेवन्यायालङ्कारभट्टाचार्यविरचिता
पदार्थखण्डनव्याख्या
समाप्ता ॥

(१) पदार्थतत्त्वं समाप्तम्—पा० ४ पु० ।



॥ श्रीः ॥

ॐ नमः परमात्मने ।

# पदार्थतत्त्वनिरूपणटीका ।

श्रीरामभद्रसार्वभौमविरचिता ।

श्रीनृसिंहगुरुशारदाशिवा[1]
नन्दिवाहनगणेशपादजे ।
वर्द्धतां मम सुभक्तिमालया
भूयसी रुचिरपास्तपापके[2] ॥ १ ॥

नानस्य तर्कसरसीरुहकाननेषु
चूडामणेर्दिनमणेश्चरणौ प्रणम्य ।
श्रीरामभद्रसुकृती कृतिनां हिताय
लीलावशात् किमपि कौतुकमातनोति ॥ २ ॥

(१।६)[3] तत्र तेषु पदार्थेषु मध्ये । न दिक्कालाविति । पूर्वस्यां घट इति प्रतीतिविषयविभुत्वमिह दिक्त्वं कालत्वं चेदानीं घट इत्यादिप्रतीतिविषयविभुत्वम् अतो न सिद्धसिद्धि-व्याघातो न वा घटादावंशतो बाधः । पक्षतावच्छेदकसामाना-धिकरण्येन साध्यसिद्धेरुद्देश्यतायामतिरिक्तदिगादेर्निराकरणा-नुपपत्तेः विभुत्वं च मूर्त्तेतरद्रव्यत्वं न तु परममहत्त्वम् ईश्वरे

१ सरस्वतीशिवा—इति १ पुस्तके ।
२ श्लोकोऽयं नास्ति २ । ३ पु० ।
३ (१ । ६) अनेन प्रथमपृष्ठे षष्ठपङ्क्त्यां मुद्रितेन मूलेन योगः कार्य इति ज्ञेय-मेवमग्रेऽपि ।

परिमाणस्य निराकरिष्यमाणत्वात् । तास्त्र प्रतीतय उदयगिरितपनसंयोगाद्यात्मकदिगुपाधेः सूर्यक्रियादिरूपकालोपाधेः स्वाश्रयसंयुक्तसंयोगादिरूपपरम्परासम्बन्धघटकतया दिक्कालाववगाहन्त इति भाष्यादयः । नन्व सर्वदिक्कालोपाधिवैशिष्ट्यप्रतीत्यापत्तेः । विशेषणताविशेषस्यैव सम्बन्धत्वात् । स च सम्बन्धोऽतिरिक्तोऽनतिरिक्तो वेत्यन्यदेतत् । उदयगिरितपनसंयोगादेश्च प्राच्यादित्वे तत्पश्चिमादिदिग्वर्तिन्यपि ततः प्राच्यामयमित्यादिप्रतीतेरापत्तिः किन्तु तदपेक्षया उदयगिरिसन्निध्यादिकमेव प्राच्यादित्वमिति । केचित्तु तदीयत्वनिरूपितेनोदयगिरिसंयोगादिविशेषेण ततः प्राच्यादित्वव्यवहार इत्यपि वदन्ति । घटादेर्विशेषणतयैव[1] तास्ताववगाहन्ते । तत्तद्दिगुपाधिविशिष्टस्यैकस्य वस्तुनस्तत्तत्कालोपाधिविशिष्टस्य चैकस्य वस्तुनो घटादिविशेषणत्वेन भानमन्तरेण पूर्वस्यां दिशि घटः प्रतीच्यां दिशि घटः तस्मिन् काले पट एतस्मिन् काले घट इत्याद्यनुगतकालाद्याकारस्य प्रत्ययस्यानुपपत्तेरिति लीलावतीकृतः । मानाभावादिति । ईश्वरातिरिक्तत्वे[2] मानाभावादित्यर्थः । अथोक्तानुगतप्रत्ययानुपपत्तिरेव तयोर्मानम् ईश्वरस्य तद्विषयत्वे प्राच्यां प्रतीच्यां दिशीदानीं तदानींमित्यादेश्च विलक्षणप्रत्ययस्यानुपपत्तेरित्यत आह । तत्तन्निमित्तेति । तत्तत्कालदिगुपाध्यवच्छिन्नादित्यर्थः । तत्तत्कार्यं विलक्षणप्राच्यादिप्रत्ययः । परेषामिति । अतिरिक्तदिगादिवादिनामपि तयोरेकैकत्वस्यैव स्वीकारेण तत्तन्निमित्तसमाधानवशादेव प्राच्यां

१ विशेषणविषयैव–पा० २ पु० ।
२ अतिरिक्तत्वेन–पा० १ पु० ।

प्रतीच्यामित्यादेरिदानीं तदानीमित्यादेश्च प्रत्ययस्य विलक्षणताया वक्तव्यत्वादिति भावः । यत्तु काले दिशीति प्रतीत्योर्विषयभेदानुभवान्न तयोरभेद इति लीलावतीरीतिः । तन्न विभिन्नोपाधिविषयकत्वेनैव तदुपपत्तेः उपाधिमतोर्भेदः प्रतीयत इति[1] वासनाविरसमानानामेव सरणिः । अन्यथा प्राच्यां प्रतीच्यामित्यादिप्रतीतिष्वप्युपाधिमतां भेदोनुभूयत इति कथामाचेण नानादिक्कालसिद्धेर्वादुरन्तापत्तेरिति न किञ्चिदेतत् । अथेश्वरादेव तत्तत्कार्योत्पत्तिर्न तु जीवादित्यत्र को हेतुः । तेषामनन्तत्वमिति चेत् न प्रत्येकमादाय विनिगमकाभावात् । नैवम् जीवानां कालत्वदिक्त्वरूपविशेषणाविशेषवत्त्वे ज्ञानादिसमवायवत् तस्य मनसा लौकिकप्रत्यक्षापत्तेः । वस्तुतस्तु प्राच्यां दिशि घट एतस्मिन् काले पट इत्यादिप्रतीतयो विलक्षणविशेषणतावत्त्वरूपदिक्त्वकालत्वे उपाधी अवगाहन्ते । वैलक्षण्यं च विषयतात्वादिवदखण्डोपाधिः । अवगाहन्तां वा दिक्कालपदवाच्यत्वलक्षणमेव दिक्त्वं कालत्वं च केशवो हरिः केशरी हरिरित्यादिप्रत्यया इव हरिपदवाच्यत्वरूपं हरित्वमिति नाहशप्रत्ययविषयस्य शब्दसमवायिविभुनः शशविषाणसमत्वात् कान्नभाववद्विभावचिन्तेति शब्दसमवायिकारणतयाऽतिरिक्ताकाशसिद्धिः । न चेश्वर एव तथा अनन्तकोटिजीवैः प्रत्येकं विनिगमकाभावेन सर्वत्र तथा कल्पने गौरवादिति ॥

(३ । ३) नैयायिकनयं निराकरोति । शब्देति । जन्यमात्रं प्रति क्लृप्तनिमित्तकारणतापूर्ववर्तित्वेन शब्दं प्रत्यपि भगवतः

(१) भेदोनुभूयत इति-पा० २ पु० ।

कारणतायाः क्लृप्तत्वात् नच समवायिकारणतामाचकल्पनयैव समवायिकारणता निर्वहति । जीवे शब्दकारणत्वं समवायित्वं च द्वयं कल्प्यमतो गौरवमिति भावः । अथ शब्दजनकादृष्टवतो जीवस्य शब्दकारणतां साधयदनुमानं लाघवाच्छब्दसमवायिकारणतामेव साधयति । अन्यथा ईश्वरे निमित्तसमवायिकारणतयोर्जीवेषु निमित्तकारणतायाः कल्पने गौरवं स्यादिति जीव एव समवायी शब्दानामित्यत आह । शब्दस्तज्जन्य इति । अथ कार्यतावच्छेदकभेदेन प्रत्यासत्तिभेदेन च कारणताया भेदात् कार्यत्वावच्छिन्नं प्रति यन्निमित्तकारणत्वं ततोऽन्यदेव शब्दत्वावच्छिन्नं प्रति समवायिकारणत्वं नच प्रत्येकजीवमादाय विनिगमकविरहितमिति नोक्तलाघवावतार इत्यत आह । अहमिति । अथ शब्दवानयमिति कमादायापाद्यते । लौकिकप्रत्यक्षं चेन्न शब्दात्मनोर्मनःश्रवणयोरयोग्यतया तदनुपपत्तेः । तदन्यज्ञानं चेदिष्यत एवैतत् ईश्वरः शब्दवानितिवद्युक्तेस्तुल्यत्वादिति चेन्न सत्यपि मनःसंयुक्तस्वात्मसमवाये शब्दस्यायोग्यतयाऽदृष्टादीनामिव मानसलौकिकप्रत्यक्षं प्रति तादात्म्येन प्रतिबन्धकतया निर्वाहेण गौरवापत्तेः । स्वतन्त्रास्तु लौकिकमानसप्रत्यक्षं प्रति विषयस्य विशिष्यैव हेतुत्वोपगमात् सामान्यसामग्र्याश्च विशेषसामग्रीसहिताया एव फलजनकत्वेन विशेषसामग्रीविरहादेव धर्मादेरप्रत्यक्षतोपपत्तौ न प्रतिबन्धकत्वं कल्प्यते । कल्प्यतां वा गुणलौकिकमानसत्वावच्छिन्नं प्रति जनकतावच्छेदकतया बुद्धित्वादिव्यापको विषयगतो जातिविशेषो लाघवात् । तथा च शब्दानामस्मदादिगुणत्वेपि मानसनिरासादयुक्तमेव तदिति प्राहुः । वस्तुतो मृदङ्गादीनामेव

गुण: शब्द: तादृशशब्दं प्रति मृदङ्गत्वादिना समवायिकारणता-या एव लाघवेनोचितत्वात्। त्वयापि मृदङ्गत्वादिना निमित्तका-रणतायाः स्वीकारात् युज्यते च रीतिरयं मृदङ्गशब्द इत्यादि-प्रतीतेरनुभवसिद्धत्वात्। न च तत्रावच्छेदकत्वं विषयो मानाभा-वात् अन्यथा इहावच्छेदकतात्मकस्वरूपसम्बन्धस्य अन्यत्र समवायस्य कल्पने गौरवात् मूले संयोग इत्यादौ वृक्षाद्य-धिकरणस्यैव प्रकृतेप्यधिकरणान्तरप्रतीत्यापत्तेश्च। न चैवं सति-मुरजादौ मुरजीयशब्दनाशो न स्यात् मुरजादिविशेषगुणनाशं प्रति मुरजादिनाशस्य हेतुत्वादिति वाच्यम् सति मुरजादौ पाके-न मदीयरूपादिनाशवत विरोधिगुणादेव शब्दस्यापि नाशो-पपत्तेः। इत्थं च श्रोत्रमपि कर्ण एव कर्णेन शृणोमीति प्रत्ययात् तस्य च समवाय एव प्रत्यासत्तिः वीचीतर-ङ्गन्यायेन कर्ण एव शब्दोत्पत्तेः। अवच्छेदकताख्यसम्बन्धविशेषे वा स च मृदङ्गादिसमवेत एव क्वचित् शब्दे क्वचित्कर्णस्य अत एव वीचीतरङ्गन्यायेनोत्पादकल्पने गौरवप्रसङ्गोपि निराकृ-तो भवति भवन्ति च निराबाधाः प्रत्यभिज्ञादय इति दिक्। अथातिरिक्ताकाशानभ्युपगमे कथं कर्णविवरावच्छिन्नाकाशस्य श्रोत्रत्वमुपपद्यतामत आह। श्रोत्रमपीति। तथाविधं कर्णविवरा-वच्छिन्नम्। अत्र च श्रोत्रत्वं शब्दग्राहकबहिरिन्द्रियत्वं वस्तु-तस्तु श्रोत्रपदवाच्यत्वमेव श्रोत्रत्वं श्रोत्रतत्सन्निकर्षयोः शब्द-ग्रहहेतुत्वे मानाभावात् कर्णावच्छिन्नशब्दत्वेन विषयविधया-हेतुत्वेनातिप्रसङ्गाभावस्य त्वयापि वाच्यत्वात् वस्तुत अवच्छे-दकतासंसर्गेण विषयगतस्यैव कर्णस्य कर्णत्वेन हेतुत्वं लाघवात्

अत एव कर्णेन शृणोमीति हेतुत्वमवगाहमाना प्रतीतिः सङ्गच्छते। श्रोत्रपदवाच्यत्वमपि तस्यैव श्रोत्रेण शृणोमीति व्यवहारात् कारणान्तरकल्पने गौरवादिति समीचीनः पन्थाः ॥

(१०।३) मनोऽपि चासमवेतभूतमित्येव पाठः। स्वतंमिति पाठस्तु प्रामादिकः। अतिरिक्तमनोवादिनापि तथा स्वीकारात्। मनसः परमसूक्ष्मत्वेन श्रुतिषु प्रसिद्धत्वात् असमवेतभूतस्य त्रसरेणुरूपस्यानुधावनम्। मनस्त्वं चेदात्मग्राहकेन्द्रियत्वं मनःपदवाच्यत्वं वा नातः सिद्धसिद्धिव्याघातः। नन्वेवं युगपच्चाक्षुषरासनाद्युत्पत्तिः स्यादिन्द्रियमनोयोगहेतुत्वेन त्वया तस्या वारयितुमशक्यत्वात्। त्वन्मते चक्षुरादिभिरेकदा मनोयोगस्य सत्त्वादित्यत आह अदृष्टेति। अतिरिक्तमनोभ्युपगमे चक्षुराद्येकतरेण मनःसंयोगोत्पत्तिसमये नान्यतरेण तदुत्पत्तिरदृष्टविशेषोपग्रहादेव तथा च तत एव ज्ञानयोर्युगपदनुत्पत्तौ नातिरिक्तमनस्सिद्धिरिति भावः। अदृष्टविशेषोपग्रहः अदृष्टविशेषघटिततत्तदसाधारणकारणकलापस्य विरोधित्वम् अदृष्टेन फलस्यादर्शनेन विशेषस्योपग्रहः तत्तत्कारणकलापविरोधित्वावधारणं वा एवं च क्वचिद्बुद्धियौगपद्यानुभवेऽपि निराबाधपदमादधातीति दिक्। इदं च बोध्यम्। आत्मादिग्रहे मनसः तत्सन्निकर्षस्य च हेतुत्वे मानाभावः तद्व्यतिरेकेण कार्यव्यतिरेकाभावात्। प्रत्यक्षसामान्ये इन्द्रियतत्सन्निकर्षत्वादिना हेतुत्वस्यासम्भवदुक्तिकत्वात् जन्यज्ञानसामान्ये मनःसंयोगसम वायिकारणत्वेन मनोयोगस्यात्मग्रहे हेतुत्वमिति न युक्तम् एकत्वादेरिव ज्ञानादेरपि सासमवायिकारणकत्वे मानाभावात्। तस्मान्मनःपदवाच्यत्वमेव इह मनस्त्वमिति ॥

(११।२) परमाणुद्व्यणुकयोरिति। त्रसरेणोर्द्रव्यसमवेतसमवेतत्वद्रव्यसमवेतत्वयोर्मानाभाव इत्यर्थः। नन्वेवं त्रसरेणोरुत्पत्तिर्न स्यात् समवायिकारणाभावादित्यत आह। त्रुटाविति। विश्रामादिति। द्रव्यसमवायित्वस्येत्यादि। असमवेतत्वसामानाधिकरण्यं विश्रामः। तथा च तस्यासमवेतद्रव्यत्वात् सदातनत्वेनोत्पत्तिरेव नास्तीति भावः। चाक्षुषद्रव्यत्वादिति। आत्मघटाभावयोर्यथाक्रमं व्यभिचारवारणाय चाक्षुषपदं द्रव्यपदं च। ते चेति। त्रुटिसमवायिन इत्यर्थः। द्रव्यसमवायित्वं परमाणौ व्यभिचारीति चाक्षुषेति द्रव्यविशेषणं चाक्षुषस्य द्रव्यत्वस्य समवायित्वमात्मन्यपीति द्रव्येति चाक्षुषद्रव्यवत्वं संयोगेनात्मनोऽपीति समवायसंबन्धेन तादृशद्रव्यस्य हेतुतालाभाय समवेतत्वादिति। अन्यथेति। अप्रयोजकादप्यनुमानाद्वस्तुसिद्धावित्यर्थः। तादृशेति। चाक्षुषद्रव्येत्यर्थः। अत्र त्रुटिसमवायिसमवायिपक्षतेः पक्षत्वं समवेतत्वस्य च साध्यत्वमवसेयम्। नन्वणुव्यवहारोऽणुपरिमाणनिबन्धन इति तदाश्रयद्रव्यसिद्धिरावश्यकीत्यत आह। अणुव्यवहार इति। अपकृष्टपरिमाणेति। अपकृष्टमहत्त्वेत्यर्थः। नानाऽपकृष्टदीर्घत्वोत्कृष्टमहत्त्ववति तथा व्यवहारः एवं ह्रस्वव्यवहारोप्यपकृष्टदीर्घत्वनिबन्धनः। दीर्घेऽपि दीर्घतमतो ह्रस्व इति व्यवहारादिति बोध्यम्।

(१५।४) नन्वीश्वरे द्रव्यत्वेन परिमाणवत्त्वमनुमेयमित्यत आह। द्रव्यत्वस्येति। यथा त्रुटित्वादेरन्यतमस्यासाधकं द्रव्यत्वं तथा परिमाणस्यापि अप्रयोजकत्वादिति भावः। ननु ईश्वरस्यापरिमितादृष्टित्वादीश्वरस्य परिमाणवत्त्वं दुर्वारमत आह।

तस्य चेति । ईश्वरे महत्त्वव्यवहारस्य नित्यज्ञानादिरूपोत्कर्षनिबन्धनः जीवतोपि तत्र तथा व्यवहारादिति भावः । वस्तुतः पुनरीश्वरस्य द्रव्यत्वेऽपि मानाभावः तत्र संयोगे विभागेऽपि च मानाभावः मानाभावाच्च क्रियाविशेषं प्रति प्रयत्नवदात्मसंयोगासमवायिकारणकत्वम् । नन्वेवमात्ममनोयोगादिजन्यताया ज्ञानादौ त्वयैव बहुशो निरासादस्मदादीनामपि संयोगविभागौ न स्यातामिति चेत् न स्यातामेव अत एव द्रव्यत्वमपि दूरपराहतम् । द्रव्यमहमिति प्रतीतिस्तु न लोकानाम् । तस्मान्मूर्तत्वमेव द्रव्यत्वमिति युक्तमुत्पश्यामः । अनुद्भूतरूपादिकं निराकरोति । रूपादीनामिति । वाय्वादाविति । आदिपदाज्जलतेजःप्रभापरिग्रहः । रूपादिकमित्यादिपदाद्गन्धरसस्पर्शपरिग्रहः । अन्यथेति । न च लाघवादभावत्वव्याप्येन भावाभावसाधारणेन वाखण्डोपाधिनाऽभावस्य वस्तुमात्रस्य वा योग्यत्वान्मूर्तसामान्याभावस्यायोग्यत्वेपि न तेषामयोग्यत्वमिति वाच्यम् तथापि प्रमाणाभावात्तादृशरूपादेः साधयितुमशक्यत्वात् । द्रव्यत्वस्येव पृथिवीत्वादेरपि गन्धाद्यसाधकत्वात् । अथ समवेतद्रव्यं प्रति स्पर्शवत्त्वेन समवायिकारणत्वात् चक्षुराद्यवयवानामनुद्भूतस्पर्श आवश्यक इत्यत आह । अतीन्द्रियेति ॥

(२५।४) ननु मूर्तत्वमवच्छिन्नपरिमाणवत्त्वमित्यनन्तपरिमाणकल्पना तवाप्यावश्यकीति विनिगमकाभावात् तादृशस्पर्शसिद्धिरपि दुर्वारेत्यत आह । मूर्तत्वं त्विति । ननु मूर्तत्वं न जातिः भूतत्वेन साङ्कर्यादित्यत आह । भूतत्वमपीति । गगनमनसोरपास्तत्वादिति भावः । यद्वा ननु भूतत्वजात्या सह तुल्यव्य-

त्तिकतया मूर्तत्वं न जातिरित्यत आह । मूर्तत्वमपीति । मूर्तं मूर्तमिति शब्दप्रयोगश्च एकपदस्यापरपदवाच्यत्वपरतयोपवर्णनीय इति भावः । समवेतेति । आत्मवारणाय इत्युक्तम् । आत्मनोऽपि समवेतेन्द्रियग्राह्यद्रव्यत्ववत्त्वाद् गुणेति । गुणवत्त्वमपि एकमात्रसमवेतत्वं गुणत्वम् जातेर्निराकरिष्यमाणत्वात् । चक्षुरादेः समवेतेन्द्रियग्राह्यगुणवत्त्वाभावात् जातिगर्भता । द्रव्यत्वव्याप्येति । तत्त्वं च द्रव्यनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वम् । एतेन द्रव्यत्वव्याप्यत्वं द्रव्यत्वस्यापीति तद्दोषतादवस्थ्यम् । भेदेन तत्त्वोक्तौ च व्याप्यत्वानुधावनमनतिप्रयोजकं सत्तायाः निराकरिष्यमाणत्वादिति निरस्तम । समवेतेन्द्रियग्राह्यद्रव्यत्वव्याप्यजातिमत्त्वज्ञानवदन्यद्रव्यत्वम् । ज्ञानासमानाधिकरणधर्मसमवायिद्रव्यत्वं वा तदिति तु न्यायः । केचिदित्यस्य गौरवान्नेदं मूर्तपदस्य शक्यतावच्छेदकमित्यस्वरसः । ननु मूर्तत्वेन द्रव्यसमवायिकारणत्वेऽन्त्यावयविनापि द्रव्यमारभ्येतेत्यत आह । अन्त्यावयवीति । सत्यपि स्पर्शवत्त्वे ऽन्त्यावयवी नारभते द्रव्यं तदारम्भकविलक्षणसंयोगाभावादिति त्वयेव मयापि वाच्यमिति भावः । अन्त्यावयविभिन्नत्वस्य कारणतावच्छेदके निवेशात् तद्वारणमित्यपि केचित् । प्रागभावविरहात् तत्र कार्याभाव इत्यपि वदन्ति । न चैवं द्रव्यत्वमेव तथास्तु उक्तदिशा आत्मनोपि वारणसम्भवादिति वाच्यम् । अजनकव्यावृत्तेन मूर्तत्वेनागुरुणा कारणतायाः सति सम्भवे तद्व्यापकस्यान्यथासिद्धिनिरूपकत्वात्तेन कारणतानवच्छेदकत्वात् समानाकाराणां च

रूपरसगन्धस्पर्शस्नेहपरिमाणद्रवत्वादीनां प्रायश एकैकत्वं न तु नीलादिमात्रस्य तारतम्यानुभवात् पाकात् श्यामं रूपं नष्टं रक्तमुत्पन्नमित्यादिप्रत्ययाच्च ॥

(२८।१) पृथक्त्वमपीति । घटात् पटः पृथगित्येतत्प्रत्ययप्रकारो न द्रव्यादिभिन्नो मानाभावादित्यर्थः । गुणत्वसामान्यस्य निराकर्तव्यत्वेन तन्निषेधस्य कर्तुमशक्यत्वात् । केन तर्हि पृथग्व्यवहार इत्यत आह । अन्योन्याभावादिति । पृथक्त्वं नाभावः सावधित्वात् । न च तदसिद्धम् तथाप्रतीतेः । अभावस्तु न सावधिकः पटान्नेत्यप्रतीतेरत आह । पृथक्त्वेति । मानाभावादिति । अस्तु वा अन्योन्याभावस्यैव सावधित्वं धर्मीति न्यायात् । घटान्नेत्यादिरभिलापस्तु नास्त्येव नञ्योगे पञ्चम्या असाधुत्वादित्यपि वदन्ति । ननु पृथगादिशब्दानामन्योन्याभाववदर्थकत्वे पृथगादिशब्दस्येव नञोऽपि योगे पञ्चमी स्यात् अन्यारादितरर्तेतिपञ्चमीविधायकसूत्रेण पृथगादिशब्दसाधारणस्यान्यपर्यायान्तःपातिन एव बोधनादित्यत आह । घटादिति । तथा च तत्सूत्रेऽन्यशब्दः पृथगादिपरो न तु सामान्येन तदर्थकपर इति भावः ॥

(२९।४) दूरसन्निकृष्टयोर्ज्येष्ठकनिष्ठयोश्च परापरबुद्धिप्रकारतया परत्वापरत्वाख्ये गुणान्तरे नैयायिकादीनामभिमते निराकुरुते । परत्वेति । रूपादिभिन्ने अस्मादिदं परमपरमिति प्रत्ययविशेषणे न संयोगादिभिन्ने इत्यर्थः । विनापि परत्वापरत्वे दूरसन्निकृष्टयोर्व्यवहारमुपपादयति । विप्रकृष्टेति । बहुतराल्पतरसंयुक्तसंयोगाभ्यामित्यर्थः । जेष्ठकनिष्ठयोस्तदुपपादय-

ति । ज्येष्ठत्वेति । तज्ज्येष्ठत्वम् तत्प्रागभावाधिकरणक्षणवृत्तित्वं तदुत्पत्तिक्षणवृत्तिध्वंसप्रतियोगिसमयवृत्तित्वं वा । तत्कनिष्ठत्वञ्च तदधिकरणक्षणवृत्तिप्रागभावप्रतियोगित्वं तदधिकरणसमयध्वंसाधिकरणक्षणोत्पत्तिकत्वं वा । घटादेर्ज्येष्ठत्वादिव्यवहारविरहहेतुतत्पदार्थस्ताहृशवृत्तित्वादिकं च प्राणित्वेन विशेषणीयम् । तथाविधेति । परापरव्यवहारेत्यर्थः । तच्चेति । आद्ये विप्रकृष्टत्वसन्निकृष्टत्वे । तृतीयमिति । प्रयागतः काशीविप्रकृष्टा मथुरा । मथुरातः काशीसन्निकृष्टः प्रयाग इति व्यवहारादिति भावः । अन्त्ये ज्येष्ठत्वकनिष्ठत्वे । परस्परेति लक्ष्मणात् ज्येष्ठो रामो रामात्कनिष्ठो लक्ष्मण इति व्यवहारादिति भावः ॥

(३०।३) विशेषोऽपीति । द्रव्यादिभिन्नो न भाव इत्यर्थः । ननु समवायित्वे सति समवायिव्यक्तेर्यद्व्यावृत्तं तत्तदसमवेतसमवेतशून्यधर्मसमवायीति व्याप्तेर्घटपटादाववधारणात् । सजातीयनित्यद्रव्यद्वये परस्परासमवेतसमवेतशून्यधर्मसिद्धावर्थाद्विशेषसिद्धिः । अत्र च द्रव्यत्वादिभिः सिद्धसाधनवारणाय तदसमवेतेति । एकत्वादिभिस्तद्वारणाय समवेतशून्येति । अभावव्यक्तिभिस्तद्वारणाय समवायीति । अभावे व्यभिचारवारणाय हेतौ समवायित्वे सतीति । घटादावभावव्यावृत्तिसत्त्वेनाभावसमवेतत्वाप्रसिद्ध्या व्याप्यत्वासिद्धिः स्यादिति समवायीति । अनुपादेयमेव वा तत् साध्ये तदसमवेतेति परित्यज्य स्वासमवायितत्कत्वस्य वक्तव्यत्वात् साध्ये समवायत्वं साक्षात्स्वाश्रयसमवेतत्वादिपरम्परासाधारणं नातः सजातीयघटद्वये व्यभिचारः विशेषमादाय तत्रापि साध्यसत्त्वात् समवायित्वे सतीत्यपहाय

नित्यद्रव्यत्वे सतीति वाच्यमत आह । विनापीति । समवायेनेति शेषः । स्वत एव । तादात्म्यादिना स्वीयत एव । तथा च यथा विशेषस्य समवायेन तदवृत्तिधर्ममन्तरेणापि तदवृत्तिधर्मसाचस्त्वेन तद्व्यावृत्तिः तथा प्रकृतेपीत्यप्रयोजकत्वात् तथाव्याप्तिरेव नास्ति किन्तु यो यद्व्यावृत्तः स तद्व्यावृत्तधर्मवानित्येव व्याप्तिरिति भावः । शङ्कते । योगिन इति । न एवेति । तथा च तेषां तदीक्षणमेव नास्ति मानाभावादिति भावः ॥

(३२ । २) ननु व्याप्यवृत्तिवृत्तिरूपत्वादेः कथमव्याप्यवृत्तिवृत्तित्वं सविषयावृत्तिव्याप्यवृत्तिवृत्तिजातेरव्याप्यवृत्तिवृत्तित्वाभावनियमात् अव्याप्यवृत्तावस्मदादिज्ञानादौ व्याप्यवृत्तीश्वरज्ञानादौ च वर्तमानस्य ज्ञानत्वादेर्वारणाय सविषयावृत्तीत्यत आह । सविषयेति । ननु तथापि साधकाभावाद्रूपं नाव्याप्यवृत्तीत्यत आह । पक्के चेति । श्यामत्वमिति । रक्तत्वाभावस्य । न तु रक्तत्वमपीति शेषः । तथा चैकत्र घटेऽवच्छेदकभेदेन रक्तत्वतदभावोपलम्भात्प्रत्यक्षासिद्धमेव तदव्याप्यवृत्तित्वमिति भावः ॥

(३३ । १) नैयायिकवैशेषिकौ विजातीयनानारूपवदवयवारब्धे चित्ररूपवत्ताप्रतीतेर्नीलाद्यतिरिक्तमवयवविजातीयं नानारूपासमवायिकारणकं व्याप्यवृत्ति चित्ररूपं स्वीकुरुतस्तन्निराकरोति । चित्रमपीति । चित्राकारप्रतीतिविषयरूपं न नीलाद्यतिरिक्तमित्यर्थः । एकत्र सजातीये नानारूपक्रमेण चित्ररूपव्यवहाराभावाद्विजातीयेति । तथेति । चित्ररूपव्यवहारेत्यर्थः । एकमस्य चित्ररूपमिति प्रत्ययस्तु एकं वनमितिवत् समूहस्यैकत्वादिति भावः । नीलादेरिति । न चेदमप्रयोजकं

चित्ररूपं प्रति नीलादीनां व्यभिचारेण नीलरूपत्वादिना हेतुत्वासम्भवात् । न च स्वविजातीयरूपसहितरूपत्वेन हेतुत्वं स्वविजातीयत्वं च चित्रत्वातिरिक्तं यत्स्वसमवेतं तदन्यधर्मसमवायित्वं नातश्चित्रावयवके चित्ररूपानुपपत्तिरिति वाच्यम् स्वत्वाननुगमात् । नापि रूपत्वेन तद्धेतुत्वं नीलाद्येकैकमात्रावयविके तदनुपपत्तिस्तु प्रागभावविरहादिति सम्यक् रूपवति रूपानुत्पत्त्या रूपं प्रति रूपत्वावच्छिन्नात्यन्ताभावस्यैव हेतुत्वेन तत्र प्रागभावस्याहेतुत्वात् तस्य निरस्तत्वाच्च ॥

एवं चित्रस्पर्शोऽपि नातिरिक्तः समाना। धिकरणविजातीयस्पर्शसमुदायादेव तद्व्यवहारोपपत्तेः । इत्थं च चित्ररसोऽपि नातिरिक्तः अवयविनो नीरसत्वे तु सामानाधिकरण्यं परम्परया बोध्यम् । संयोगेति । अवयवसंयोगविशेष इत्यर्थः । स चावयविनि परम्परासम्बन्धेनेति भावः ॥

एतेन चित्रगन्धोऽपि निराकर्तव्य इति दिक् । नन्ववयवतिक्तादिनाऽवयविनि मधुराद्यवच्छेदेन तिक्ताद्यजननात् स्वाश्रयसमवेतत्वसम्बन्धेनावयवतिक्तेतररसादेः समवायेनावयवितिक्तादिप्रतिबन्धकत्वमास्थेयमिति कथमवयविनि भिन्नाद्यवच्छेदेन तिक्ताद्युत्पत्तिः । न च तिक्तादीनां स्वाश्रयावच्छेदेनावयविनि तिक्तादिजनकत्वस्वाभाव्येनैवोपपत्तौ अवच्छेदकान्तरे तिक्ताद्यनुत्पादो नोक्तप्रतिबध्यप्रतिबन्धकभावं कल्पयतीति साम्प्रतम् विना तादृशप्रतिबध्यप्रतिबन्धकभावं तथा स्वाभाव्यानिर्वाहात् कार्यानुत्पादस्य विना कारणविरहमनभ्युपगमात् । अथावयवितिक्ताद्यवयवतिक्तयोरवच्छेदकतासम्बन्धस-

समवायसम्बन्धाभ्यामपि कार्यकारणभावान्तरं कल्पनीयं कारणै-कार्थसमवायगर्भया असमवायिकारणतयोक्तातिप्रसङ्गस्य निराकर्तुमशक्यत्वादित्युक्तस्वाभाव्यनिर्वाह इति चेत् तर्हि कार्य-कारणभावान्तरस्यावश्यकत्वे लाघवादुक्तप्रतिबध्यप्रतिबन्धक-भाव एवास्थीयते। अन्यथा तादृशावयविन्यनन्तकोटितिक्तादि-कल्पनागौरवापत्तेः। तिक्तेतररसाद्यभावहेतुतायां च न प्रति-योगिनिवेशः तस्याभावविशेषपरिचायकत्वादिति कारणतावच्छे-दके गौरवशङ्कापि नावतरतीत्यभिप्रायवानाह। नीरस एवेति। अवयविनि तिक्तादिप्रत्ययस्तु परम्परयाऽवयवतिक्तादिकमाल-म्बत इति भावः। नन्वेवं गतमव्याप्यवृत्तिरूपस्पर्शाभ्यां तचा-प्यन्यावच्छेदेन नीलाद्यनुत्पत्तये तथा प्रतिबध्यप्रतिबन्धकभा-वानां वक्तव्यत्वात् एवं च चित्ररूपस्पर्शावप्यतिरिक्तौ स्वीकार्या अन्यथा तस्यावयविनोऽनीरूपस्पर्शत्वे चाक्षुषस्पार्शनाद्यनुपपत्तिः तयोस्तत्र कारणत्वात् तत्र च रूपत्वादिनैव नीलादीनाम-समवायिकारणत्वं चित्ररूपस्पर्शौ प्रति च तदितररूपस्प-र्शयोः प्रतिबन्धकत्वात् प्रतिबन्धकाभावस्य कार्यसहवृत्तित्वेनै-वाच हेतुत्वात् न नीलाद्युत्पत्तिसमये चित्रोत्पत्तिः। गुरवस्तु चित्ररूपं प्रति नीलेतररूपत्वपीतेतररूपत्वरक्तेतररूपत्वादिना असमवायिकारणत्वं चित्रस्पर्शं प्रति च सुकुमारेतरस्पर्शत्वक-ठिनेतरस्पर्शत्वादिनाऽसमवायिकारणत्वमतो नातिप्रसङ्गव्य-भिचारौ नीलादिपदं च तारतम्यपरं उत्कृष्टापकृष्टनीलाभ्या-मपि चित्ररूपजननादित्याहुः। नैवम् अवच्छेदकतासम्बन्धेना-वयविनीलोत्पत्तिं प्रति समवायेनावयवनीलादेर्नियामकतायाः

कल्पनेनैवातिप्रसङ्गभङ्गे तत्रैव प्रतिबध्यप्रतिबन्धकभावाकल्पनात् चित्ररूपस्पर्शयोस्तदभ्युपगमबाधेन बहुतरकार्यकारणभावकल्पनामपेक्ष्य तत्रावयविनि नीलादिसुकुमारादिकल्पनाया एव न्याय्यत्वात् । इदं तु चिन्त्यते । नीरूपो निस्पर्शस्तत्रावयवी किं न स्यात् द्रव्यचाक्षुषं प्रति रूपस्य स्पार्शनं प्रति च स्पर्शस्य हेतुत्वे मानाभावात् चाक्षुषसामान्यं प्रति विषयकारणताया भावाभावसाधारणेन शक्तिविशेषेणैव लाघवेनावच्छेदात् । अन्यथा गुणादिचाक्षुषेपि रूपस्य सम्बन्धविशेषेण हेतुत्वस्य वक्तव्यत्वेगौरवापत्तेः । अनन्तरूपव्यक्तिकल्पनापेक्षया शक्तिकल्पनाया एव न्याय्यत्वाच्च । एवं स्पार्शनसामान्यं प्रति तथैव रीतिरस्तु । वस्तुतस्तु तत्रावयविनि समवायेन नीलादिप्रतीतेर्बाधकं विना भ्रमत्वायोगादव्याप्यवृत्तयो रूपरसगन्धस्पर्शा दुर्वाराः प्रत्येतव्यकल्पनागौरवेण प्रतीतिबाधरूपादेः त्रुटिमात्रगततापत्तेः । एवं च न कुत्रापि रूपादीनां विजातीयरूपादिविरोधित्वं नीरस एव वा तत्रावयवीत्यत्र तु वाकारोऽनास्थायामिति तत्त्वम् ॥

(३७ । १) एतेनेति । गन्धोऽपि चाव्याप्यवृत्तिः सुरभ्यसुरभिभ्यामवयवाभ्यामारब्धे ऽवयविनि सुरभ्यवच्छेदेन घ्राणसन्निकर्षेऽसौरभ्यानुपलम्भात् निर्गन्ध एव वा तत्रावयवीत्यर्थः । पितृचरणास्तु तत्र तत्रावयविन्यव्याप्यवृत्तिनीलादिवच्चित्ररूपरसगन्धस्पर्शा अपि दुर्वाराः चित्ररूपानुगताकारप्रतीतेश्चित्ररूपत्वादिजातिमन्तरेणोपपादयितुमशक्यत्वात् । विजातीयनानारूपत्वादेरननुगतत्वात् । अनुगतप्रत्ययापलापिनीत-

त्वादेरपि विलोपप्रसङ्गात् । न च नीलादिवृत्तिरेव सा जातिः नीलत्वादिना परापरभावानुपपत्तेः । एवं नीलपीतमात्र-पीतरक्तमात्रतत्तच्चित्रमात्रनीलपीतरक्तमात्राद्यारब्धेषु चित्र-त्वव्याप्यजातयोऽपि दुर्वाराः । तत्तत्तच्च नीलत्वादिनैव तयोस्तस्य तेषां च प्रयोजकत्वम् चित्रत्वं च नासमवायिकारणप्रयोज्यम् अस्तु वा पृथिवीरूपत्वेन रूपत्वेन वा तत्रासमवायिकारणत्वं नीलपीतरक्तमात्रारब्धावयवके च चित्ररूपादिचतुष्टयमुत्पद्यते नीलपीतरक्तमात्रारब्धं नीलरक्तमात्रारब्धं पीतरक्तमात्रारब्धं रक्तचित्रमात्रारब्धं च चरमं व्याप्यवृत्ति इतरत्रयमव्याप्य-वृत्तीति विशेषः । तत्तदवयवद्वयमात्रावच्छेदेनैवेन्द्रियसन्निकर्षे तादृशतादृशचित्रोपलम्भात् । एवं रसादावप्यूहनीयमिति प्राहुः । अस्मत्तातसिद्धान्तरहस्ये तु नीलविशिष्टपीतादिना नीलपीतोभयादिना वावान्तरचित्रबुद्धिसम्भवात् नावान्तरचि-त्रसिद्धिः । न च सामान्यचित्रत्वेनावान्तरचित्रत्वा-सामानाधिकरण्यप्रत्ययान्नैवमिति वाच्यम् नीलपीतादिविशिष्ट-चित्रेणावान्तरचित्रप्रतीतेः सम्भवस्य तथापि दुर्वारत्वात् नीला-द्यविशेषिता ये नीलादिभेदास्तत्तदाश्रयरूपसमुदायेनानुगतचि-त्रप्रतीतेः सम्भवेन चित्रसामान्यस्याप्यनभ्युपगमाच्च । नन्वेवमपि नीलादिभेदे समुदायेन नीलाद्यनुगतप्रत्ययोपपत्तेः जातिमात्र-मेव विलीयेतेति चेद्विलीयत एव । यदि नाखण्डधर्मावलम्बनानु-भवः यदि चेत्तथापि तादृशानुभवोऽभ्युपेयते तदास्तु तत्र तत्रावय-विनि नीलत्वादितत्तच्चित्रत्वाश्रयमेकमेव व्याप्यवृत्तिरूपादिकं लाघवात् नीलत्वादिकमेव तत्राव्याप्यवृत्तिगुणविशेषाणामिव

जातिविशेषाणामप्यव्याप्यवृत्तित्वे ऽविरोधात्(१)। परस्परव्यभिचारिजात्योः सामानाधिकरण्यस्य बाधकविरहे सत्तर्कप्रमाणसिद्धस्यानभ्युपगममात्रेण निराकरणायोगात् अत एव ककारादिषु सर्वेषु ताराद्याकारानुगतमतिरुपपद्यते । एकस्यैव तारत्वादेः ककारादिवृत्तित्वात्। उपपद्यते च मार्दपाषाणसौवर्णघटाद्यननुगताकारानुगतमतिरिति स्वतन्त्रः पन्थाः । अथ नीलाद्येकमात्रावयवावच्छेदेनेन्द्रियसन्निकर्षे चित्रं चित्रत्वं वा किं न गृह्यते इति चेन्न विजातीयनानारूपवत्त्वग्रहस्य तत्र हेतुत्वात् । यादृशि यादृशि चित्रे येन येन रूपेणासमवायिकारणत्वं तादृशचित्रग्रहे तत्त्वग्रहे वा तेन रूपेण चित्रत्वग्रहे वाश्रयग्रहः तदवान्तरजातिग्रहो वा हेतुरिति युक्तः पन्थाः त्रसरेणुश्च(२) यदि तत्तद्दिगवच्छेदेन नीलपीतादिरूपवत्तयानुभूयते भवति च तदपाकजचित्ररूपवानपि नो चेत् तदा तच्छून्य एव इति संक्षेपः। ये तु चित्ररूपादिमति नीलादिकं न स्वीकुर्वते स्वीकुर्वते च द्व्यणुकादिकं तेषामवयवजातीयनानारूपवत्त्वग्रह एव चित्रस्य तद्वत्त्वस्य वा ग्रहे हेतुः। अत एव त्रसरेणोश्चित्रं रूपं तत्र तद्वत्त्वं वा न गृह्यत इत्याचार्याः । वस्तुतस्तु त्रसरेणोश्चित्ररूपाग्रहे तदारब्धचतुरणुकादिषु तद्ग्रहो न स्यादिति नैवं पन्थाः । किन्तु नीलावयवावच्छेदेनेन्द्रियसन्निकर्षावयवनीलादिगतनीलत्वादिग्रहप्रतिबन्धकदोषाभावाश्च तत्र हेतव इति त्रसरेणोरपि चित्ररूपग्रहो नानुपपन्न इत्यपर

(१) बाधकाभावात्-पा० २ पु० ।

(२) त्रुटिश्च-पा० २ पु० ।

इति कृतमकृतविचारेण ॥

(३८ । २) ननु नीलपीताद्यवयवैरारब्धे स्वस्वावच्छेदेन नीलपीतादिनानोत्पत्तिवत् सर्वैर्नीलैरवयवैरारब्धे ऽवयविन्यपि स्वस्वावच्छेदेन नानानीलोत्पत्तिः स्यादित्यत आह । सर्वैश्चेति ॥

(३८ । ६) असमवायीति । स्वस्वावच्छेदेन नीलपीतादिनानोत्पत्तिवत्सर्वैर्नीलैरारब्धे कारणत्वस्यात्माश्रयादिदोषेण कारणतानवच्छेदकत्वादिति भावः । ननु भावकार्यत्वस्यासमवायिकारणजन्यत्वव्याप्यत्वादेकस्यासमवायिकारणजन्यत्वं सेत्स्यतीत्यत आह । भावेति । अप्रयोजकतया तथा व्याप्तिरेव नास्तीति भावः । एवं द्वित्वादेरपि नासमवायिकारणकत्वम् । न च द्वयोरेव द्वित्वमुत्पद्यते न त्रिष्वित्यादिनियमरक्षार्थं तत्तदेकत्वे हेतुत्वमुपेयमिति युक्तं तावतापि समवायिन एव विशेषतो हेतुताया युक्तत्वात् तत्तत्प्रागभावविरहादन्यत्र तदनुत्पत्तेरिति केचित् । द्वित्वादिकमप्याश्रयोत्पत्तेरनन्तरमेवोत्पद्यते तन्नाशादेव नश्यति नित्यद्रव्यमात्रवृत्तिद्वित्वादिकं तु नित्यमेव । ननु सामानाधिकरण्यवदेकत्वबुद्धिरूपापेक्षाबुद्धिरुत्पद्यते तन्नाशान्नश्यति अपेक्षाबुद्धिश्च तुरीयक्षण एव नश्यति नातो द्वे द्रव्ये इत्यादिविशिष्टवैशिष्ट्यसाक्षात्कारानुपपत्तिः । अहं सुखीत्यादिवद् द्वे द्रव्ये इत्यादिबुद्धेरपि विशेषणांशे ऽलौकिकत्वमेवेति न युक्तं मानाभावात् अपेक्षाबुद्धिशून्येन तदग्रहणस्यापेक्षाबुद्धेस्तद्व्यञ्जकत्वेनाप्युपपत्तेः । तत्तत्काले तत्तत्पुरुषापेक्षाबुद्धिजन्यानन्तकोटिद्वित्वादिकल्पनागौरवप्रसङ्गात् । एकपुरुषीयापेक्षाबुद्धिजन्यद्वित्वादेरपेक्षाबुद्धिशून्यपुरुषान्तरेणाग्रहणात् तत्तत्पुरुषी-

यापेक्षाबुद्धिजन्यद्वित्वादि तेन गृह्यत इति स्वभावकल्पने गौरवाच्च अत एव द्वे द्रव्ये इत्यादिविशिष्टवैशिष्ट्यबोधोऽपि सूपपादः। वस्तुतः पुनरेकमेकमित्यनुगतमतेरेकत्वं सकलैकवृत्त्येकमेव सदातनं कल्प्यते लाघवाद्बाधकाभावाच्च। इत्थं च द्वित्वादयोऽपि व्याख्याता इति नव्याः। नाश एवेति एवकारेण समवाय्यसमवायिकारणनाशस्य हेतुत्वं व्यवच्छिद्यते(१)। नित्येति। तच्च परमाणुसमवेतं त्रुटिसमवेतं वेत्यन्यदेतत्। विद्यमानविभक्तावयवकघटादिनाशे चेत्यपि द्रष्टव्यम्। समवायिनाशस्थले च द्वितीयक्षणे ऽसमवायिकारणीभूतसंयोगनाशस्तदनन्तरं तृतीयक्षण एव द्रव्यनाशः कार्यकारणभावान्तरकल्पनापेक्षया क्षणविलम्बकल्पनायाः समुचितत्वादिति भावः। न चासमवायिकारणत्वस्यैकस्याभावात् कथं सामान्यतो हेतुहेतुमद्भाव इति वाच्यम् जन्यद्रव्यारम्भकतावच्छेदकसंयोगगतजातिविशेषस्यैव तत्त्वात् कर्मादिजन्यतावच्छेदकं तु तद्व्याप्यं जन्यतावच्छेदकाननुगमस्यादोषत्वात्। वस्तुतो द्रव्यासमवायिकारणसंयोगः कर्मज एव न संयोगजः। क्रमश्च विनिगमकमिति चेत् परमाणोस्त्रसरेणोर्वा समवेतद्रव्यं प्रति असमवायिकारणस्य संयोगस्य संयोगजत्वासम्भवादित्यस्मत् पितृचरणाः। अत्रेदं प्रतिभाति। एकद्रव्यासमवायिकारणनाशेऽपि द्रव्यान्तरानाशात् तत्तद्द्रव्यनाशं प्रति तत्तद्व्यक्तित्वेनैवासमवायिकारणनाशस्यापि हेतुत्वं वाच्यम्। तथा च समवायिकारणनाशेऽपि द्रव्यान्तरानाशात् तत्तद्द्रव्यनाशं प्रति तत्तद्व्यक्तित्वेनैवासमवायिकारणनाशस्यापि

(१) समवायिकारणनाशस्य प्रयोजकत्वं व्यवच्छिद्यते-पा० २ पु०।

हेतुता वाच्या तथा च समवायिकारणनाशस्यापि तत्र तत्र तेन तेन रूपेण हेतुत्वं कल्पनीयम् । समवायि(१)कारणस्यासमवायिकारणस्य च नाशयोरेकशक्तिमत्त्वेन कारणत्वम् एकावयवनाशोत्पत्तिसमये यत्रावयवान्तरे द्रव्यान्तर(२)संयोगविभागोत्पत्तिस्तत्र तदधीनानामवयविन्यनन्तसंयोगादीनां कल्पनमपेक्ष्य एकस्याः शक्तेः कल्पनाया एव समुचितत्वात् ॥

(४१ । १) स्पर्शवत्त्वमेवेति । एवकारेण रूपवत्त्वव्यवच्छेदः निःस्पर्शप्रभादेः स्पार्शनविरहात् स्पर्शस्तत्र प्रयोजको न तु रूपमिति भावः । प्रयोजकजनकलाघवेन स्पर्शवत्त्वेनैव हेतुताया युक्तत्वात् । प्रयोजकं जनकतावच्छेदकम् विषयहेतुताया अनेनैव रूपेणावच्छेदादित्यपि केचित् । अत एवेति । अन्यथा रूपस्य तत्र प्रयोजकत्वे विशेष्यस्यायोग्यत्वात् तदनुपपत्तिरेव स्यादिति भावः । अस्पार्शनत्वेति । वस्तुतः स स्पार्शन एवेति तुशब्देन सूचितम् । प्रकृष्टतमं त्रुटिपरिमाणावधिकप्रकर्षात्मकजातिविशेषवत् । गौरवादित्यादेः रूपं न तत्र प्रवेशनीयमित्यनेनान्वयः । प्रामाणिकं च नेदमित्याह । मानाभावादिति । अनन्यथासिद्धान्वयाद्यनुविधानमेव मानमित्यत आह । त्वगिति । तत्र स्पार्शनप्रयोजके । ननु वायोरध्यक्षत्वे तद्गतसंख्यादयोपि प्रत्यक्षाः स्युः योग्यमात्रसमवायेनैव (३) तेषां योग्यत्वादित्यत आह । फूत्कारेति । स्फुटतरेति तद्विषयकप्रत्यक्षत्वेनानुभूयमानप्रत्यक्षविषया इत्यर्थः । अन्य-

(१) हेतुत्वं केन वारणीयम् । अस्तु वा समवायि-पा० २ पु० ।
(२) अवयवान्तर-पा० २ पु० ।
(३) संयोगादिनैव-पा० २ पु० ।

र्थापि वायौ गृह्यमाणे तत्संख्यादिप्रत्यक्षं भवत्येव परं तु न दोषात् स्फुटमिति भावः । तथा प्रयोजकम् । अन्यथा वाय्वादेर- चाक्षुषता न स्यादिति भावः । नेति । निःस्पर्शस्य पिशाचादे- रचाक्षुषताया रूपविरहेणैवोपपत्तेरिति भावः । तादृशयोग्य- धर्मसुखदुःखादिमत आत्मनो न तादृशं प्रत्यक्षम् । अत उक्तम् अनात्मसमवेतेति । इदं तु नित्यस्य स्वरूपयोग्यस्य फलावश्यंभाव इत्यभ्युपेत्य अन्यथा चाक्षुषस्पार्शनरूपविशेष- कारणरूपस्पर्शविरहादेव तस्य तादृशप्रत्यक्षविरहोपपत्तेः सर्वविशेषणवैयर्थ्यापत्तेरित्यवधेयम् । शब्दवदीश्वरवारणाय शब्देतरेत्युक्तम् । योग्यरसवतो रसनगतपित्तद्रव्यत्रसरेणोर्वा- रणाय रसेतरत्वम् वायूपनीतसुरभिभागत्रसरेणोर्वारणाय गन्धे- तरेति । पृथिवीत्वादिमत्तयोक्तातिप्रसङ्गतादवस्थ्यमतो जातीत- रेति । समवायेन तद्वत्त्वलाभाय समवायित्वेति । नातः कालिकविशेषणतया घटादिरूपवदीश्वरे स एवातिप्रसङ्गः । ननु शब्देतरेति व्यर्थम् ईश्वरात्मसमवेतस्यानात्मसमवेतेत्यनेनैव वार- णादित्यत आह । सुखादीति । नेश्वरेति । तत्र सुखदुःखा- नुत्पत्तेरिति भावः । तदीयस्येति । ईश्वरीयेत्यर्थः । विषयि धर्मासमानाधिकरणेति विवक्षणीयसाधारणायोग्यपदव्यावर्त- नीयमाह । पिशाचेति । पिशाचादेरवारणे तदवयवस्य प्रत्य- क्षतापत्तेरिति भावः । ननु रूपस्पर्शघटितविशेषसामग्रीविर- हादेव पिशाचावयवादीनां प्रत्यक्षता न भविष्यतीत्यत आह । आदीति । पिशाचारम्भकचतुरणुकतदारम्भकसंयोगादिकं- तदर्थः । तदवारणे तद्गतत्रसरेणोरध्यक्षतापत्तेर्नित्यस्येत्यादि-

व्याप्तेरिति भावः । लाघवमभिप्रेत्याह । विषयीति । न च लाघवेन ज्ञानासमानाधिकरणेत्येव युक्तं ज्ञानत्वस्य जातित्वादिति वाच्यम् । इच्छाकृत्यसमानाधिकरणत्वादिना सह विनिगमकाभावात् कार्यकारणभावत्रयापत्तेः । यद्यपि विषयिधर्मासमानाधिकरणत्वस्यापि तैः प्रत्येकं विनिगमकाभावाल्लाघवात्तान्येव वक्तुमुचितानि तथापि तादृशसामानाधिकरण्यानां समनियमात् तदवच्छिन्नप्रतियोगिताक एव भेदः प्रतियोग्यविशेषितो निवेशितः प्रतियोगी च तत्र परिचायक इति लाघवमकिञ्चित्करमित्यवधेयम् । वस्तुतोऽस्मदादिकृत्यादेः समयविशेषावच्छेदेन ज्ञानासमानाधिकरणत्वाद्विषयीत्याद्युक्तम् । तत्र न तत्र तेषां सर्वदा संस्कारसमानाधिकरणत्वादिति युक्तमुत्पश्यामः । अत्र रसनगतपित्तद्रव्यादिचसरेणुवारणाय रूपेतरत्वाद्युपादानं न युज्यते तैरपि कदाचित् पाकजरूपस्पर्शवद्भिः रूपस्पर्शवद्द्रव्यारम्भेन तेषामपि कदाचित् प्रत्यक्षत्वादिति वदन्ति । अस्मदादीति । अस्मदादेः परिमाणशून्यत्वं नयनसंसृष्टपित्तद्रव्यस्य परिमाणवत्त्वमितिमते त्वित्यर्थः । वायूपनीतसुरभिभागादेश्च परिमाणाभावादिति भावः । टीकाकृतैव केवलमस्मदात्म([1])परिमाणप्रत्यक्षाभ्युपगमात् नयनसंसृष्टपित्तद्रव्यस्य परिमाणवत्तायाः केनाप्यनुपलम्भात् । रूपवत्त्वस्य च परिमाणव्याप्यत्वे मानाभावात् मत इत्युक्तम् । न च नयनगतपित्तद्रव्यं गृह्यत एव न परन्तु तत्र रूपमेवेति वाच्यम् । द्रव्यचाक्षुषप्रत्यक्षं प्रति रूपस्य हेतु-

(१) केवलमस्मदारब्धात्म–पा० २ पु० ।

न्वात् नयनगतपित्तद्रव्यीयचुटे: रूपवत्वे ऽचाक्षुषत्वानुपपत्तेः युज्यते च तावदस्मदादेः परिमाणशून्यत्वं केनापि तदनुपलम्भात् । न तु नयनगतपित्तद्रव्यपरिमाणवत्त्वं केनाप्यनुपलम्भादत आह । यद्वेति । तथा च तस्य परिमाणशून्यत्ववत्ताद्दृशप्रत्यक्षशून्यत्वान्न व्यभिचार इति भावः । नन्वेवं पीतः शङ्खः इत्यारोपो न स्यात् नयनगतपित्तद्रव्ये ऽनुभूयमानस्यैव पीतरूपस्य शङ्खादावारोपसम्भवात् पीतान्तरस्य तदानीमसन्निकर्षादित्यत आह । स्मर्यमाणेति । इदन्तु चिन्त्यते समवेतेन्द्रियजन्यद्रव्यप्रत्यक्षत्ववदसमवेतेन्द्रियजन्यप्रत्यक्षत्वादिवत् चक्षुरितरेन्द्रियजन्यप्रत्यक्षत्वादिवच्च समवेतेन्द्रियजन्यद्रव्यप्रत्यक्षत्वमपि न कार्यतावच्छेदकं मानाभावात् । इत्थं च द्रव्येतरप्रत्यक्षत्वमिव द्रव्यप्रत्यक्षत्वमपि न तथेति । शब्देति । अत्र शब्देतरत्वेन ईश्वरस्य रसेतरत्वेन रसनगतपित्तद्रव्यस्य गन्धेतरत्वेन वायूपनीतसुरभिभागस्य जातीतरत्वेन तेषां योग्यत्वेनेश्वरादीनां व्युदासः । अस्मदादेः परिमाणवत्त्वे तु परिमाणवत्त्वमेव तथेति मन्तव्यम् । अथ रसगन्धेतरत्वं न युज्यते रसगतपित्तद्रव्यवायूपनीतसुरभिभागयोरध्यक्षत्वादत आह । रसनेति । तथा च न चक्षुषा न वा त्वचा तद्ग्रह इति भावः । रसनेनैव तद्ग्रहो भविष्यतीत्यत आह । रसनेति ।

(४७ । ५) एतेनेति । सोपि न रूपस्पर्शवान् घ्राणं च न द्रव्यग्राहकमित्यप्रत्यक्ष एवेति भावः ॥

(४८ । २) तस्य घटत्वत्वस्य घटेतरासमतत्वे सति घटनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपस्यातीन्द्रियघटेत

रादिघटितत्वेनातीन्द्रियत्वात् योग्यधर्ममात्रावच्छिन्नयोग्य मात्रवृत्तिप्रतियोगिताकत्वेनैवाभावस्य योग्यत्वादिति भावः एवं न जातित्वेनेति । तस्यापि नित्यानेकसमवेतत्वरूपस्या तीन्द्रियत्वादिति भावः । आदिपदेन समवेतत्वादिपरिग्रहः । समवायत्वस्य नित्यसम्बन्धत्वरूपस्यायोग्यत्वान्नानासमवायवा दिनो ग्रन्थकारस्य नये त्वखण्डोपाधिरूपस्यायोग्यवृत्ति त्वादिति भावः । सर्वथैवेति । पटत्वादिसामान्याभावः समवेत सामान्याभावश्च न कोपि प्रत्यक्ष इति भावः । अत्र च घटत्वादिनिरूपितसमवायेन घटाद्यवच्छिन्नप्रतियोगिताको घटत्वादेरभावो गृहीतुं शक्यत एवेति चिन्त्यम् । वस्तुतो लाघवादभावचाक्षुषादेरभावत्वव्याप्येन चाक्षुषादिमात्रे वा भावाभावसाधारणेन शक्तिविशेषेण विषयहेतुतावच्छेदान्न तेषां योग्यत्वं तथा सति द्रव्यचाक्षुषं प्रति रूपादेः कारणत्वं विलीयेतेति चेद्विलीयताम् किं तन। सर्वमिदं सिद्धान्तविरुद्धं न्यायविदामिति चेत् । न न वयं नैयायिकनयमनुरुन्धानाः पदार्थतत्त्वं विवेचयामो यदमीषामुक्तमेव युक्त्या निरूपयितु मुत्सहामहे(१) तथा सति निःकर्षनिरासप्रसङ्गादिति सूक्ष्म मीक्षामहे ।

(४८ । ४) सत्ता चेति । सद्व्यवहारप्रयोजक इत्यर्थः जातित्वावच्छेदेन द्रव्यगुणकर्मसु समवेतानां चित्वेनाभाव इति भावः । ननु सद्व्यवहारवशादेव सा सेत्स्यतीत्यत आह जात्यादेरपीति । तत्र च जातेरभावादिति भावः । ननु

(१) यदमीषामुक्तमेव युक्ततया निरूपयितुमुत्सहामहे–पा. २ पु. ।

घटादौ सद्व्यवहारबलेन सत्ताजातिसिद्धौ जात्यादावेकार्थसमवायादिसम्बन्धेन तया जात्यैव सद्व्यवहाराभावेन वर्तमानत्वनिबन्धन एव तत्र सद्व्यवहारः समर्थनीय इत्यत आह । घटादाविति । अतीतादौ सद्व्यवहाराभावेन वर्तमानत्वनिबन्धन एव तत्र सद्व्यवहार इति भावः । घटादावनुगतसदाकारप्रत्ययस्तु न लोकानां नहि विहाय देशकालयोः सत्त्वं नाम किञ्चित्केनाप्यनुभूयते ऽतिरिक्तं कदापि । अत एवास्मिन् काले घटप्रागभावः सन्न घटः तन्तुषु पटः सन्न पट इत्यादिकः सार्वलौकिको व्यवहारः किन्तु भावत्वं तदिति प्रत्यक्षसिद्धमित्यर्थः । अथवा सत्ता चेत्यादेस्तान्त्रिकाणां सच्छब्दसङ्केतावच्छेदिका न जातिरित्यर्थः । किं तु भावत्वं तदिति तान्त्रिकाणां सच्छब्दसङ्केतावच्छेदकं भावत्वमित्यर्थः । ननु भावत्वमपि साक्षात्परम्परासाधारणं सत्त्वमेव अतिरिक्तस्य दुर्वचत्वादत आह । तच्चेति । नन्वभावत्वमपि भावान्यत्वं तत्र च भावत्वमुक्तरूपेण सत्ताजातिरेव वक्तव्या अन्यथाऽन्योन्याश्रयापत्तेरत आह । अभावत्वं चेति । अनुगतेति । अभावाकारानुगतप्रत्यक्ष इत्यर्थः । वस्तुतोऽभावत्वस्य भावान्यत्वात्मकतया भावत्वस्य च विधित्वेनावभासात् भावत्वमखण्डोपाधिः अभावत्वं तु भावान्यत्वमित्यभिप्रेत्याह । भावत्वमेवेति । एवकारेणाभावत्वं नाखण्डोपाधिः किन्तु भावान्यत्वमिति सूचितमिति प्राहुः । नन्वेवं भावत्वं भावो न स्यात् स्वस्मिन् स्वावृत्तेरित्यत आह । तच्चेति । अत्र च विधिरूपे भावत्वे मानाभावः । भावोऽयमित्यादिप्रत्यय एवानुगतो मानमिति चेत्

कस्यायं बोधः । न साधारणस्य लोकस्य तदसिद्धेः । अस्त्वयं तान्त्रिकाणामनुगतो व्यवहारश्चेति चेत् द्रव्यान्यतमत्वमादाय तस्याप्युपपत्तेः । न चेदेवं तन्त्रेषु परवचनादेव पदार्थस्वीकारापत्तिरिति वदन्ति ॥

५१ । ३ । अतीन्द्रियेष्वित्युपलक्षणम् ऐन्द्रिकेष्वपि रूपरसादिष्वेकजात्याननुभवादित्यपि द्रष्टव्यम् । ननु रूपादावनुगतगुणव्यवहारादेव गुणत्वं सेत्स्यतीत्यत आह । तुरगादेरिति । तथा चोत्कर्षप्रवृत्तिनिमित्तगुणव्यवहारो न जातिमेवालम्बते उत्कर्षः पुनरनुगत एवेति भावः । ननु द्रव्यकर्मान्यसामान्यवत्त्विकारणतात्वेनानुगतीकृतानां रूपादिकारणतानामवच्छेदकतया गुणत्वं जातिरायातीत्यत आह । एकस्येति । अतिप्रसङ्ग इति । रूपद्रव्यकर्मेतरसामान्यवद्वृत्तिकारणतावच्छेदकत्वेन रूपव्यावृत्तरसादिचतुर्विंशतिवृत्तिजातेरेवं जात्यन्तराणामपि सिद्ध्यापत्तिरित्यर्थः । जातिसङ्करेति । रूपद्रव्येतरसामान्यवद्वृत्तिकारणतावच्छेदकत्वेन रसादिकर्मसाधारणजातेरपि सिद्ध्यापत्त्या तया सङ्करप्रसङ्ग इत्यर्थः । प्रत्यक्षानुमित्यादिसाधारणीमनुभवत्वजातिं निराकरोति । शाब्देति । स्मृत्यन्येति । तथा च तान्त्रिकाणामनुभवबलान्नानुभवत्वजातिसिद्धिरिति भावः । अनुभवामीत्याकारप्रत्यय(१)बलादनुभवत्वजातिसिद्धिर्निराबाधेत्यत आह । जातिस्त्विति । उक्तप्रत्ययविषयजातिस्त्वित्यर्थः । ननु विशेषणज्ञानविशेषणतावच्छेदकप्रकार-

(१) साक्षात्कारप्रत्यय-पा० २ पु० ।

कज्ञानयोः कार्यतावच्छेदकघटकतया तत्सिद्धिः । विशिष्टानुभवत्वविशिष्टवैशिष्ट्यानुभवत्वाभ्यामेव तत्कार्यतावच्छेदात् न तु तथा ज्ञानत्वाभ्याम् तादृशस्मृतौ व्यभिचारात् संस्कारद्वारा तथात्वस्य च प्रत्यक्षे ऽसम्भवात् । क्वचित् साक्षात् क्वचित् परम्परया तथात्वस्यानुगतत्वात् । विशिष्टस्मरणेभ्यः पूर्वं निर्विकल्पकस्मरणात् विशिष्टवैशिष्ट्यस्मरणेभ्यश्च पूर्वं विशिष्टस्मरणानां कल्पनामपेक्ष्य लाघवेन स्मृतिव्याहृत्ततयानुभवत्वजातेरेकस्या एव कार्यतावच्छेदकतया कल्पनस्योचितत्वात् न च स्मृत्यन्यज्ञानत्वमेव तदवच्छेदकम् एतदपेक्षयाऽनुभवत्वजातेरेवावच्छेदकतया कल्पयितुमुचितत्वात् तादृशस्मृत्यन्यज्ञानत्वानां विशेषणविशेष्यभावे विनिगमकाभावेन षट्ककारणाभावापत्तेरित्यस्माकं पूर्वपक्षः । सिद्धान्तस्तु सर्वमिदं विशेषणज्ञानत्वादिना विशिष्टबुद्धिं प्रति हेतुतापक्षे एव शोभते तदेव तु नास्ति प्रमाणाभावात् । विशेषणादिसन्निकर्षादेव तदुपपत्तेः अत एव निर्विकल्पकमपि नास्ति विज्ञानमित्याहुः । न च स्मृतिं प्रति अनुभवत्वेन हेतुत्वात् तस्य च लाघवाज्जातिरेवावच्छेदकतया कल्प्यते । न च स्मरणस्य स्मरणजनकत्वे घट इत्यादिस्मरणोत्तरतृतीयक्षणादौ तादृशस्मरणं न स्यात् घट इत्याकारकस्मरणत्वेन तदाकारसंस्कारनाशकतया तत्स्मरणेन तादृशसंस्कारनाशादिति वाच्यम् लाघवेन तत्तत्पुरुषीयचरमस्मृतेरेव तत्तद्व्यक्तित्वेन तत्पुरुषीयसंस्कारनाशकतोपगमेन तदानीं संस्कारनाशनिरासात् उद्बोधकविरहेणैवावान्तरा स्मरणाव-

रत्वात् । युज्यते च रीतिरियम् इतरथा चानन्तसंस्काराणामनन्तनाशकल्पनापत्तेः । एकदा मदीयसकलसंस्कारनाशोपगमे तु तावत्संस्कारप्रतियोगिक एक एव नाशो बाधकाभावात् । एवं कार्यतापि तत्तद्व्यक्तित्वेनैवेति तु प्रकारो विभाव्यताम् । तर्हि मया वक्ष्यमाणवर्त्मना भावनाख्यसंस्कारनिराकरणमपीति सर्वथा नानुभवत्वजातिसिद्धिरिति दिक् ॥

५५ । १ । घटाद्यभावेति । घटाद्यत्यन्ताभावान्योन्याभावात्यन्ताभाव इत्यर्थः । अतिरिक्तं वेति । भावातिरिक्त एव न तु घटाद्यात्मक इत्यर्थः । अबाधिताभावत्वेति । अत्र चाभावत्वं भावभिन्नत्वं न त्वखण्डोपाधिस्तस्य भावसाधारण्याभ्युपगमेनैव तर्कोपपत्तेः सम्भवात् । अभावाभावस्यातिरिक्तत्वे इत्यर्थः । तदाभावत्वेति । तदा घटाभावत्वपरामर्शः । परे तु नास्तीति प्रत्ययो नाभावत्वमालम्बते परमखण्डमत्यन्ताभावत्वं तच्च भावाभावसाधारणमभ्युपेयतां कृतमतिरिक्तैरभावाभावैः । घटाभावात्यन्ताभावो न भाव इति च प्रत्ययो न लोकानामिति वदन्ति ॥

अन्ये तु घटवति घटाभावो नास्तीतिप्रत्ययबलादतिरिक्त एव तदभावः विशेषणतावच्छेदकैक्येन तदुपपादने चाभावमात्रविलयप्रसङ्गः तदधिकरणवृत्तिधर्मैरेव तदभावत्वेनानुगतीकृतैरनुगततदभावप्रत्ययानामुपपादयितुं शक्यत्वात् । विशेषणैक्यानुभवो भावभिन्नत्वानुभवो वा पुनरचापि न पाणिपिहित इति प्राहुः । भावत्वं संसर्गाभावत्वं चेति । अन्योन्याभावसामान्यान्योन्याभावमभिप्रेत्य घटान्योन्याभावभेदतादृशाभावत्वं

संसर्गाभावत्वं पटान्योन्याभावत्वं चेत्यवसेयम्। भावत्वं संसर्गाभावत्वं प्रायशस्तत्तदन्योन्याभावत्वं चेति युक्तः पाठः। तात्पर्यास्तु प्रामाणिकत्वादियमनवस्था न दोषायेति अतिरिक्ता एव भेदाभेदाः। अन्यथा अन्योन्याभावमात्रमेव नातिरिच्येत अधिकरणादृत्तिधर्माणामेव तत्त्वमभ्युपेतुं शक्यत्वादित्याहुः ध्वंसस्य प्रागभावः प्रागभावस्य च ध्वंसः प्रतियोग्येव प्रतियोगि सत्त्वकाल एव तत्प्रत्ययादिति प्राचीनमतं दूषयति। ध्वंसेति। तस्येति। घटादेरित्यर्थः। ध्वंसप्रागभावौ न स्त इति द्वित्वमिच्छोपलक्षणं तेन घटस्य ध्वंसो नास्ति प्रागभावो नास्तीत्यर्थः। वस्तुतो घटादेर्ध्वंसो भविष्यति प्रागभावो नष्ट इत्यादिकप्रयोग एव ग्राह्यः। उक्तस्य प्रत्ययस्यात्यन्ताभावविषयत्वेनाप्युपपत्तेरित्यवधेयम्। अभावत्वेति। यद्यपि दर्शितप्रत्ययो ध्वंसत्वप्रागभावत्वे अखण्डोपाधी एवावगाहते न तु भावभिन्नत्वघटिते तेऽपि भावसाधारणे एवोपगमितुमुचिते लाघवात्। घटध्वंसस्य प्रागभावो न भाव इत्यादिकश्च प्रत्ययः शशविषाणसम एव तथापि घटादौ ध्वंसत्वप्रागभावत्वे घटध्वंसप्रागभावप्रतियोगित्वोपगमे घटध्वंसस्य प्रागभावो भविष्यति ध्वंसो नष्ट इत्यादिप्रत्ययप्रसङ्गा एव दूषणमवसेयमिति वदन्ति। उत्तानाः पुनरत्र ध्वंसप्रागभावयोः ध्वंसत्वप्रागभावत्वनिरूपितप्रतियोगित्वविरहादेव नोक्तप्रत्ययप्रसङ्ग इति नातिरिक्तावेव तावित्याहुः। परे तु प्रागभावो ध्वंसोऽन्योन्याभावोऽत्यन्ताभावश्च नाभाव इति प्रागभावत्वावच्छेदेन भावभिन्नत्वप्रत्ययं कल्पयन्तोऽभावाभावमात्रमेवातिरिक्तं कल्पयन्ति। प्रागभाव एवेति। भविष्यतीति

प्रत्ययो वर्तमानकालोत्तरकालोत्पत्तिकत्वावलम्बनः इदानीं घटप्रागभाव इत्यादिकस्तु प्रत्ययो न लोकानामिति भावः ॥

५७ । ३ । संस्कार एवेति । युक्तं चैतत् लाघवेन तत्तविषयत्वेन विषयितासंसर्गेण तत्तया वा ज्ञानलक्षणप्रत्यासत्तेर्हेतुत्वात् अत एव कृतितज्जनकेच्छाद्वेषाणां तत्ताविशिष्टतया तत्तासाक्षात्कार उपपद्यते कृत्यादेरेव प्रत्यासत्तित्वादिति संस्कारेति । संस्कारध्वंसे व्यभिचारवारणाय ज्ञानेनेति । अविरोधादिति । प्रत्यभिज्ञायाः संस्कारजन्यत्वाविरोधादित्यर्थः । अनुद्भूते । उद्बोधकविरहिते । अभिभूते । स्मृतिप्रतिबन्धकसहिते । तत्तास्मृतीति । तथा च गुरुणापि तत्ताज्ञानत्वेन हेतुत्वम् कृतिसाक्षात्कारपूर्वं च विषयस्मृतिर्नियमतः कल्प्यते तज्जनकेच्छाद्वेषयोश्च न तज्जनकज्ञानस्यैव वा प्रत्यक्षत्वमेवेति भाव इति साम्प्रदायिकाः । संस्कारान्यतत्ताविषयकत्वेन तदन्यत्वविशिष्टतत्तया संस्कारव्यावृत्तकृत्यादिसाधारणजातिविशेषवत्तत्ताविषयकत्वादिना हेतुत्वम् । उक्तानन्तविषयस्मृतिकल्पनामपेक्ष्य लाघवेन जातिविशेषकल्पनाया उचितत्वात् । वस्तुतस्तत्त्वनिरूपणदशायां समानाधिकरणज्ञानेच्छादीनामपि युगपदुत्पादाभ्युपगमात् तत्ताज्ञानत्वेनैव हेतुत्वमिति परैरपरिशीलितः पन्था । संस्कारो निर्विषयक एव सविषयकत्वे मानाभावात् । अनुभवव्यापारतयैव तत्सिद्धेः । इत्थं तत्ताविषयकत्वेनैव हेतुत्वमिति स्वतन्त्राः । एतेन विशिष्टबुद्धिं प्रति विशेषणधियो हेतुत्वेन विशिष्टवैशिष्ट्यबुद्धिं प्रति च विशेषणतावच्छेदकप्रकारकबुद्धेर्हेतुत्वमते तदपि व्याख्यातम् । अत्र च

विशेषणतावच्छेदकप्रकारकबुद्धेर्हेतुतायां तथा निश्चयत्वमेवावच्छेदकं रक्तो दण्डो न वेति संशयोत्तरं रक्तदण्डवानिति ज्ञानानुदयादिति साम्प्रदायिकाः । नाद्यः ज्ञानत्वेनैव तत्कारणताया अवच्छेदो न तु निश्चयत्वेन उक्तसंशयानन्तर रक्तारक्तदण्डवानिति बुद्धेरानुभविकत्वादिति पुनरस्मत्पितामहचरणाः । वस्तुतो भावनाख्यसंस्कारेऽपि मानाभावः ध्वंसद्वारैव स्मृतिहेतुताया उपपत्तेः ध्वंसस्यानन्तत्वेऽपि उद्बोधकविरहादेव स्मृतेर्विरहात् । प्रतियोगिध्वंसयोरेकत्राजनकत्वप्रवादस्य मानाभावेनाश्रद्धेयत्वात् । यत्तु ध्वंसस्य कारणत्वेऽनुभवादिप्रतिबन्धकः स्यात् न चैवमेकत्र जनकत्वाप्रतिबन्धकत्वप्रतिबन्धकयोर्विरोधादिति तन्न विरोधासिद्धेः । अथैवं स्वनाशसहायस्य मणेरपि दाहहेतुत्वं स्यान्न स्यात् मानाभावात् मणिध्वंसं विनापि दाहदर्शनात् । यदभावत्वेन कारणत्वं तस्यैव प्रतिबन्धकत्वाद् विना चानुभवादिकं स्मृतेरनुदयात् । अथैवं धर्मोऽधर्मश्च द्वयमपि न स्यात् विहितनिषिद्धक्रिययोरपि ध्वंसद्वारा सुखदुःखादिहेतुत्वोपपत्तेः । ध्वंसस्यानन्तत्वेऽपि फलप्रवाहविच्छेदस्य तत्तद्विषयविशेषसान्निध्यविरहादेव सम्भवात् सत्यपि धर्मादौ फलानुत्पत्तेस्त्वयापि तथाभ्युपगमात् प्रायश्चित्तादीनां ध्वंसद्वारा साक्षाद्वा नरकादिप्रतिबन्धकतयैव प्रवृत्त्यादेरुत्पत्तिरिति चेन्न स्यादेवं यदि न स्यातां पापानामुद्दिश्य प्रायश्चित्तादौ पुण्यनाशं विशिष्य कर्मनाशाजलस्पर्शादौ प्रवृत्तिनिवृत्ती शिष्टानाम् । न स्याच्च प्रायश्चित्तादेः

पापादिनाशकताबोधको वेदः । यदि च शिष्टानां तथा प्रवृत्त्यादिकं नोपेयते उपेयते च वेदानामन्यथार्थकत्वं तदा स्वर्गादिकं प्रत्येव न मानं युक्तेस्तुल्यत्वात् कैव कथा तदर्थकव्यापारविचारेष्विति दिक्। अत्र च तत्ताज्ञानजन्यत्वं तत्ताविशिष्टसाक्षात्कारत्वेन लाघवात् । अत एव निर्विकल्पकसिद्धिरपीत्यस्मत्पितृचरणाः। तत्तादिविषयितानिष्ठं वैजात्यमेकमेव कल्प्यते । अनन्तनिर्विकल्पककल्पनामपेक्ष्य लघुत्वात् । एतेनेन्द्रियसंयोगादिजन्यतापि व्याख्याता व्याख्यातं चानुमित्यादौ लिङ्गकत्वादिकं घटादिशाब्दबुद्धौ घटपटादिज्ञानजन्यत्वं च। वस्तुतो लिङ्गभेदेन व्याप्तिभेदेन विभिन्नेषु परामर्शेषु वह्न्यादिविषयितानिष्ठमेकमेव वैलक्षण्यं कल्प्यते लाघवात् एवञ्च पर्वतविशेष्यकवह्निविधेयकानुमितित्वादिकमेव जन्यताया जनकतायाश्च वह्निनिरूपितविलक्षणविषयित्वादिकमेवावच्छेदकम् । एवं घटादिपदजन्यघटाद्युपस्थितावपि घटादिविषयितायामपि वैलक्षण्यमेकमेव कल्प्यते तथा च घटादिशाब्दत्वघटादिनिरूपितविलक्षणविषयित्वाभ्यामेव कार्यकारणभावः । इत्थं च केवलान्वय्यनुमानमपि निराबाधपदमादधातीति नैयायिकनयनानन्दनी सरणिः ॥

६७ । १७ । अयं स्थाणुर्न वेति वाक्यश्रवणानन्तरं पदजन्यधर्मिकोटिद्वयादिज्ञानसहितात् प्रत्यक्षप्रमाणादेव साक्षात्कारात्मकः संशयः तत्त्वस्य प्रत्यक्षत्वव्याप्यत्वादिति प्राचीनमतं निराकरोति । पदेति । पदज्ञानजन्येत्यर्थः ।

अयं स्थाणुरित्यादिवाक्ये इदंपदाद्धर्मिणः स्थाण्वादिनञ्पदाभ्यां कोटिद्वयस्य वाकारात् कोटिद्वयविरोधस्य भानमिति भावः । तदुभयविरोधस्य भानं प्रायिकं प्राचीनप्रणयानुरोधादुक्तम् यत्र वाकारो नास्ति तत्र विनाविरोधभानमपि संशयः उत्पद्यते एव एकत्र भावाभावप्रकारकबुद्धेरेव तथात्वादिति । योग्यतानिर्णये सति विशेषदर्शनादेव न संशय तेन सम्बन्धेन तत्र तत्त्वशाब्दबुद्धौ तेन सम्बन्धेन तत्र तद्वत्त्वस्यैव योग्यत्वादित्यतः संशयात्मकेत्युक्तम् । इदं तु प्राचीनमतमभ्युपेत्याभिहितं वस्तुतो विशिष्टधीसामान्यस्य कारणे संसर्गाग्रहे सति तद्विलम्बेन फलविलम्बाभावात् योग्यतादिज्ञानं शाब्दबुद्धौ नव्यनये हेतुरेव नेति मन्तव्यम् । आहत्य प्रत्यक्षप्रमाणं साक्षात्कारप्रागभावं वाऽसत्त्वाधीकृत्य शब्दत्वाख्यजातिविशेषवान् संशय इति फलितार्थः । तत्सामग्रीसत्त्वात् अयं स्थाणुरितिवाक्याधीननिर्णयस्येवायं स्थाणुर्नवेति वाक्याधीनसंशयस्यापि जातिविशेषवत्तयाऽनुभवाच्चेति भावः । यत्त्वाहत्येति अविलम्बेनेत्यर्थ इति तन्न धर्मिज्ञानादिसत्त्वे साक्षात्कारात्मकसंशयेऽपि विलम्बाभावात् । शब्दात् शब्दज्ञानात् । समानेत्यादीति । समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षो विमर्शः संशय इति सूत्रमित्यर्थः । संमतमिदमिति तत्र सूत्रे विप्रतिपत्तेरितिश्रवणादिति भावः । संशयत्वनिश्चयत्वयोर्धर्मिज्ञानसंशयसामग्र्यभावादिजन्यतावच्छेदकत्वं प्राचीनमतं स्वीकृतं निराकरोति । एकधर्मिकेति । ह्रदपर्वतौ पाषाणमयौ वा वह्नितदभाववन्तौ

इत्यादिवारणायैकधर्म्मिके एकधर्म्मितावच्छेदकविशिष्टविशेष-यकत्वावच्छिन्नविरुद्धनानाप्रकारकत्वमित्यर्थः । घटो द्रव्यं पृथिवीत्यादिवारणाय विरुद्धेति । विरुद्धत्वेन नानाप्रकारकत्व-मित्यर्थः । एतेन शुक्ताविदं रजतमेद्रूपवच्चेत्यादिबुद्धेर्निरासः । अत एव विरोधभानसामग्रीत्युत्तरग्रन्थोपि सङ्गच्छेते । अत्र च परस्परविरुद्धत्वेन नानाधर्म्मप्रकारकत्वमर्थ इत्येके । तत्प्र-कारकत्वे सति विरुद्धत्वेन किञ्चित्प्रकारकत्वमर्थ इत्यन्ये । यद्रूपेण येन च सम्बन्धेन विरोधग्रहस्तेन रूपेण तेन सम्बन्धेन च प्रकारकत्वं वक्तव्यम् । तेनायं जलत्ववान् स्नेहसमवायिका-रणतावच्छेदकजातिविरुद्धवाँश्चेत्यादेर्निरासोऽनिरासश्च-समवायादिना विरुद्धयोः पृथिवीत्वजलत्वयोः कालिकविशे-षणतया एकधर्म्मिकस्य ज्ञानस्य । नन्वत्र विरोधस्तद्वदवृत्तित्वं तद्वत्ताग्रहप्रतिबन्धकग्रहविषयत्वं वा तज्ज्ञानमपि प्रकारतया संसर्गविधया वा । नाद्यः तद्वदवृत्तित्वलक्षणविरोधस्य तदभा-वव्याप्तिपर्य्यवसायिनः संशयेनास्पर्शात् तदभावव्याप्यवत्तानिश्च-यस्य संशयप्रतिबन्धकत्वात् तदभावस्य च कार्य्यसद्भावेन हेतु-त्वात् तदभावव्याप्यवत्तानिश्चयत्वं च न तदभावप्रकारकत्वघ-टितं गौरवात् अन्यथा वह्न्यभावव्याप्यव्याप्यवान् वह्निव्याप्य-वान् पर्वत इति परामर्शदशायां पर्वतो वह्निमांस्तदभावव्याप्य-वांश्चेति संशयरूपानुमितेर्दुर्वारत्वाद्विरोधाविषयकैकधर्म्मिक-स्थाणुत्वतदभावप्रकारकज्ञानेपि संशयव्यवहाराच्च अन्यथा तस्य संशयान्यत्वे ततो निश्चयकार्य्यापत्तेः । अत एव न द्वितीयादि-

रपि। नैवम् ज्ञानविषयतया परस्परग्रहप्रतिबन्धकतावच्छेदक-धर्मस्यैवेह विरोधपदार्थत्वात् स च धर्मस्तत्त्वतदभावत्त्वादिः । परे तु परस्परग्रहप्रतिबन्धकत्वे प्रतिबध्यत्वयोरन्यतरज्ञान-विरोधितयाऽवच्छेदकमेवाविरोधः । यदा तत्तदभावयोरेकध-र्मिणि ज्ञानमेकमुत्पद्यते तदा कैव कथा तत्तदभावव्याप्ययोः । एवं च तदभावव्याप्यत्वनिश्चयत्वं तदभावाप्रकारत्वघटितमेवा-स्थीयते एकत्र धर्मिणि तु तदभावव्याप्ययोश्च संशयानुमितिरि-ष्यत एव नेष्यते तु तत्तदभावयोरित्याहुः । समाजो मिलनं युग-पदेकार्थसम्बन्धः । नीलेति । यथा घटसामग्रीतो घटोत्पत्तौ तत्र नीलरूपसामग्रीतो नीलरूपोत्पत्त्यैव नीलघटनिर्वाहे नील-घटत्वं न कार्यतावच्छेदकं तथा तत्कोटिधर्मिविरोधसा-मग्रीतो जायमानमविरोधात् एकमेव समूहालम्बनमुत्पद्य-इत्येव संशयनिर्वाहे तत्त्वमपि न जन्यतावच्छेदकमिति भावः॥ न चैवधर्मिज्ञानमन्तरेण निश्चयवत् संशयोऽपि स्यात् सति धर्मी-न्द्रियसन्निकर्षे दृष्टत्वात् धर्मिज्ञानस्य क्वचिद्धर्मीन्द्रियसन्नि-कर्षविधयैवोपयोगात् । कोट्युपस्थितेरपेक्षा च विशेषणज्ञा-नविधयाविशिष्टबुद्धिं प्रति विशेषणज्ञानाहेतुत्वे तत्कोटीन्द्रि-यसन्निकर्षं एवापेक्षितो न तु सर्वत्र तज्ज्ञानमपीति दिक् । संशयत्वशून्यज्ञानत्वं चेति । तद्विषयकत्वावच्छिन्नतद-भावादिप्रकारकत्वशून्यतद्विशेष्यत्वावच्छिन्नतत्प्रकारकत्ववज्ज्ञा-न्यज्ञानत्वरूपं तच्च तन्निश्चयत्वमित्यर्थः । ननु यथाश्रुते संशयत्वघटकतत्प्रकारकत्वस्य वैयर्थ्यात् महानसं वह्निमन्न

वा पर्वतो वह्निमानित्यस्य पर्वते वह्निनिश्चयत्वानापत्तेः । मद्वानस्तेपि तदापत्तेर्वा सम्बन्धप्रकारादिनिष्कर्षस्तु स्वयमेवावसेयः । जन्यत्वं वा नोपादेयम् अजन्यवृत्तिधर्म्मस्य जन्यतावच्छेदकत्वे विरोधाभावात् न हि स धर्मोऽन्यथासिद्धिनिरूपकः प्रमाणाभावात् । एवं न कार्यतावच्छेदकं नीलत्वादिति । न चैवं संशयसामग्र्या निश्चयाप्रतिबन्धकत्वे संशयोत्पत्तिसमयेपि निश्चयापत्तिः । निश्चयत्वस्य कार्यतानवच्छेदकतया तदुत्पत्तेरापादयितुमशक्यत्वात् तत्प्रकारकबुद्धेश्च जायमानत्वात् तदभावाप्रकारकबुद्धेरनुत्पादस्य तदभावप्रकारकबुद्धिसामग्रीसत्त्वे नापातस्तत्वादिति दिक् ॥

५८ । ४ क्षणस्येति । क्षणव्यवहारविषयस्यार्थः । क्षणक इति द्रव्यादित्रैधर्म्यमुक्तम् । तस्यानतिरिक्तत्वे घटप्रागभावक्षणो घट इति व्यवहारापत्तिरिति भावः । स्वजन्येति । तादृशयावत्प्रागभावस्येत्यर्थः । विभागो वा प्राथमिको ग्राह्यः । तेन कर्मणाश्चोत्तरोत्पन्न इत्यान्तरकर्माधीनक्रमिकानेकसंयोगसहकारात् क्रमिकानेकविभागजननेऽपि न क्षतिः । अच स्वजन्यविभागः प्रागभावविशेषपरिचायको न तु क्षणोपाधिप्रविशिष्टः एवमुत्तरत्रापीति वदन्ति । तत् कर्म तथा क्षणः सत्त्वेति मम तु क्षणत्वेनाखण्डोपाधिना अनुगम इति भावः । पृच्छति जातेचेति जायमान इत्यर्थः । कुत इति । तच स्वजन्यविभागप्रागभावविशिष्टस्य कर्मणोऽभावादिति भावः । उत्तरयति । विभागेति । नाशकनाश्यभावापन्नेत्यादिः यत्किञ्चिद्विभाग

पूर्वसंयोगविशिष्टस्य कर्मणोऽनेकक्षणस्थायित्वात् । अत्र च कर्मणः कालोपाधितायाः सर्वसंमतत्वात् कर्मणोभिधानम् । वस्तुतः परस्परविशिष्टौ तादृशविभागसंयोगावेव वक्ष्यमाणौ जन्यमानस्यैव कालोपाधित्वादित्यवधेयम् । सुतरामिति । शब्दानुगमस्याप्यभावादिति भावः । एवमिति । उत्तरसंयोगप्रागभावपूर्वसंयोगनाशविशिष्टं कर्म पूर्वसंयोगनाशोत्पत्तिसमये क्षणव्यवहारं जनयति उत्तरसंयोगोत्पत्तिसमये चोत्तरसंयोगविशिष्टं कर्मेति सुतरामननुगम इत्यर्थः । अत्रोत्तरसंयोगः स्वजन्यः संयोग पूर्वसंयोगनाशः स्वप्रयोज्यसंयोगनाश इत्यवधेयम् । न च विभागोत्पत्तिसमये ऽन्यच कर्मान्तरोत्पत्तेः स्वजन्यविभागप्रागभावविशिष्टकर्मणैव तदापि क्षणव्यवहार इति वाच्यम् तदानीमन्यच कर्मण आवश्यकत्वे मानाभावात् । प्रतिक्षणं किञ्चिज्जायते इत्येव हि नियमो न तु कर्म जायत इत्यवधेयमिति भावः । अत्र वदन्ति स्वजन्यविभागप्रागभावविशिष्टकर्मादिकमेव क्षणः क्षणशब्दस्य चोत्पत्त्यादिशब्दवन्नानार्थत्वमेव अनुगतव्यवहारस्तु शब्दैक्यादुत्पत्त्यादेरिव । इत्थं च यस्योत्पत्तेरव्यवहितोत्तरमेव यन्नश्यति तयोरेकतरविशिष्ट एवान्यतरः क्षणः समर्थनीयो विनिगमकाभावात् । अव्यवहितोत्तरत्वादिकं चेद्व्यक्तिविशेषपरिचायकं न तु तदपि प्रविष्टमिति ।

६२ । १ । एवं स्वत्वमपीति । चैत्रस्येदं धनमितिप्रतीतिविषयो धनवृत्तिचैत्रवृत्तिसम्बन्धोपीत्यर्थः । तत् स्वत्वं तत्तयेति भक्षणादिकं विनियोग इत्यर्थः । एतेनोत्पत्तिरपि व्याख्याता ।

उत्पद्यते इति प्रतीतेः प्रागभावप्रतियोगित्वमात्रं विषयो न तु स्वत्वघटितमन्यदननुगमात् प्रतीतेश्चानुगताकारकत्वात् । न च द्वितीयादिक्षणेऽपि उत्पत्त्यादिप्रतीतेरापत्तिः तदानीं प्रागभावप्रतियोगिताविरहात् किमत्र मानमिति चेत् इदानीं न भविष्यतीति प्रतीतिरेव । अत एवाद्यभाविनि श्वो भविष्यतीति नैषा मनीषोन्मिषतीति तदानीं प्रतियोगीताविरहात् । न चायं सिद्धान्तः प्रमेयवार्तिके स्फुटत्वादिति शब्दमणिदीधितौ तातचरणाः । परकीयेऽन्ने च भक्षणादिकं निषिद्धमिति भावः । तत्प्रवृत्तिरिति । किं च योग्यत्वं न शब्दस्वरूपं तस्य क्रयादेः पूर्वमुत्तरं च विक्रयादेः सत्त्वात् । एतेन तादृशविनियोगोपायविषयत्वं तत् स चोपायः क्रयादिरित्यपास्तम् । विषयतायाः धनस्वरूपत्वे उक्तदोषात् क्रयादिरूपत्वे परमेपितत्वभावप्रसंगादिति । ग्रहणं प्रतिग्रहः । उपादानमावश्यककुशादेरस्वामिकस्य अथाननुगमात् कथं स्वत्वं प्रतिग्रहाद्योः स्वत्वनाशविक्रयाद्योर्वा कार्यकारणभावग्रह इत्यत आह । कारणानामिति स्वत्वकारणीभूतप्रतिग्रहादीनां स्वत्वनाशकारणविक्रयादीनां चेत्यर्थः । अत्र स्वत्वत्वावच्छिन्नं प्रति कारणतावच्छेदकतया प्रतिग्रहादिषु एका स्वत्वनाशत्वावच्छिन्नं प्रति कारणतावच्छेदकतया विक्रियदिषु अपराशक्तिस्तृणादीनामिव वह्नौ सिध्यति स्वत्वत्वं चाखण्डोपाधिरस्तु वा जातिरिति भावः । वैजात्याद्धर्म्यात् । स्वत्वनाशजातेरसत्त्वप्यखण्डोपाधय एव जन्यतावच्छेदिका इति भावः । वाकारोऽस्वरससूच-

नाय । स च बहुतरवैजात्यकल्पनापेक्षया एकस्याः शक्तेरेव कल्पनायाः लघुत्वादिति । अत्र वदन्ति स्वत्वं नातिरिच्यते अतिरिक्तकल्पने गौरवात् मानाभावाच्च । अथ अनुगतप्रत्यय एवमानमिति चेत् न तदसिद्धेः अनुगतस्यैव तद्विषयत्वात् । अस्तु तथानुगतो व्यवहारादिति चेत् तत् किंशब्दानामनुगम एवानुगतविषये कल्पकः कल्प्यतां तर्हि सिंहादिष्वपि हरिर्हरिरित्यादेरनुगतव्यवहारादतिरिक्तो हरित्वपदार्थः । तथापि यथोक्तविनियोगार्हत्वशब्देरपास्ततया किमिदं स्वत्वमिति चेत् क्वचिद्विक्रयप्रागभावविशिष्टक्रयाविनाशः क्वचिच्च दानादिप्रागभावविशिष्टः । प्रतिग्रहादिध्वंस एव तथा प्रतिग्रहादेः पूर्वं न तथाप्रत्ययः प्रतिग्रहादिध्वंसविरहात् दानाद्यनन्तरं च न स्वत्वव्यवहारस्तत्प्रागभावविरहात् तच्च मरणस्य च ध्वंसात्मकतया विक्रयादिप्रागभावविशिष्टं तदेव क्वचित् स्वत्वं तदधिकरणक्षणध्वंसो वा । इत्थं चातिरिक्तस्वत्ववादिमते स्वत्वस्य यानियानि नाशकानि तेषां प्रागभावविशिष्टा ये स्वत्वोत्पादकानां प्रतिग्रहादीनां ध्वंसास्त एव प्रायशस्तथा विक्रयादिप्रागभावविशिष्टस्य क्रयध्वंसस्य क्रयध्वंसविशिष्टस्य विक्रयप्रागभावस्य च विनिगमकाभावेन तथात्वात् आद्यमादाय स्वत्वमुत्पन्नमित्यस्य द्वितीयमादाय च स्वत्वं नष्टमित्यस्य प्रत्ययस्य न सङ्गतिः । अतिरिक्तस्वत्ववादिना स्वत्वत्वमप्यतिरिक्तमुपेयमित्यावश्यकत्वादास्तामुपदर्शितेषु ध्वंसादिषु स्वत्वत्वकल्पना न त्वतिरिक्तस्वत्वकल्पनापीत्यपि वदन्ति ।

६५ । १ । एवं शक्तिरपीति तृणफूत्कारसंयोगादिनिष्ठं वह्निजनकतावच्छेदकमित्यर्थः । अतिरिच्यत इति । तृणफूत्कारसंयोगादीनां वह्नित्वावच्छिन्नं प्रति तत्त्वेन हेतुताया व्यभिचारेणासम्भवादतिरिक्तत्त्सिद्धिरिति भावः । अथ तृणफूत्कारयोररणिनिर्मन्थनयोर्मणितपनकिरणयोश्च सम्बन्धस्य जन्यतावच्छेदकं वह्निवृत्तिवैजात्यत्रयमेव कल्प्यते अतो न व्यभिचार इति नैय्यायिकमतं दूषयति । तृणारणीति । अथास्तु तृणफूत्कारादिसम्बन्धेषु एकाजातिरेव तथा तथापि नातिरिक्तपदार्थसिद्धिरत आह । सम्बधेति । संकरेति । इदं तु परसिद्धान्तानुसारादुक्तम् । वस्तुतः प्रमाणसिद्धसाङ्कर्यस्य न दोषावहत्वमित्याशेदितम् अतो जातिरेव सा भवितुमर्हति । न च तस्या जातित्वे योग्यव्यक्तिगतजातेर्योग्यत्वनियमात् प्रत्यक्षापत्तिः शक्तिरस्तु न तथा अतीन्द्रियत्वादिति वाच्यम् तथा जातेः प्रत्यक्षत्वे बाधकाभावात् तथात्वस्येष्टत्वात् । विविच्योपलम्भस्य च वह्निनिष्ठकार्यतावच्छेदिकानां जातीनामिव परमते दोषविशेषेणैव निरासादित्यवधेयम् । ननु तृणादिकं विना न वह्निरित्यन्वयव्यतिरेकाभ्यां तृणादीनामप्येकशक्तिमत्त्वेन कारणत्वं वक्तव्यम् । एवं फूत्कारादीनामप्यपरशक्तिमत्त्वेनेति शक्तित्रयकल्पना तवाप्यावश्यकीत्यत आह । यदि चेति । तृणादेः सम्बन्धसम्पादकतयैव वान्वयव्यतिरेकयोरुपपत्तेर्न कारणतासिद्धिः । न च तृणादेरहेतुत्वे तत्र वह्न्यार्थिनः प्रवृत्तिर्न स्यात् । सम्बन्धार्थमेव तत्र तत्र प्रवृत्तिसम्भवादिति ।

यदि चेत्युक्तम् । तृणादेरिति । आदिपदादरण्यादिफूत्कारादिपरिग्रहः । तेषां तृणादिफूत्कारादीनाम् । न च तेषु तत्सम्बन्धेषु च नवसु शक्तिरेकैव कल्प्यतां विनापि तत्सम्बन्धं केवलतृणादेरपि वह्न्युत्पत्त्यापत्तेः । अथैवं पटादिकं प्रति वेमतुरीप्रभृतीनामपि एकशक्तिमत्त्वेनैव हेतुत्वमस्तु । वेमत्वादिनानाधर्मैः कारणत्वान्यपेक्ष्य लघुत्वात् तत्तत्संयोगत्वादीनां च हेतुत्वान्न केवलं वेमादिसत्त्वे पटाद्युत्पत्तिरिति चेन्न वेमत्वादिनाऽन्वयव्यतिरेकाभ्यां तेन रूपेण हेतुताया दुर्वारत्वात् । तृणत्वादिना च नान्वयो न वा व्यतिरेकः प्रत्येकं तत्सत्त्वे वह्नेर्व्यतिरेकस्य तदसत्तायामुत्पादस्य च दर्शनात् । मणित्वादिनेति । आदिपदात् तेजस्त्वादिपरिग्रहः । मणित्वादिकमन्तरेण या जातिस्तृणादौ तां जातिमन्तरेण च मणित्वादिकं वह्निजनकमणिप्रभृतिषु वह्निजनकमणौ च तयोः समावेशापत्तेरित्यर्थः । उक्तानां तु तत्तसम्बन्धान्यतमत्वेन सम्बन्धानां तृणाद्यन्यतमत्वेन तृणादीनां हेतुत्वात् न शक्तिसिद्धिरपि । न च तत्तदन्यत्वविशिष्टैतदन्यत्वावच्छिन्नप्रतियोगिताको भेदस्तथा च विनिगमकाभावादेतदन्यत्वविशिष्टतदन्यत्वावच्छिन्नप्रतियोगिताकैरपि भेदैः कारणतावच्छेद्यत्यनन्तकार्यकारणभावप्रसङ्ग इति वाच्यम् । एकस्यैव भेदस्य तादृशनानाप्रतियोगिकत्वोपगमात् । यत्तु तथापि विनिगमकाभावात्तादृशतादृशप्रतियोगिताकत्वैर्भेदस्य निवेशात् तद्दोषतादवस्थ्यमिति । तन्न तादृशप्रतियोगिताकत्वपरिचितेनाखण्डभेदेनैव जनकताया अवच्छेदात् तच

च तादृशप्रतियोगिताकत्वानामनिवेशात्। अथैवं सर्वत्र तत्तदन्यान्यत्वस्यैवावच्छेदकतासम्भवेऽपि कार्यकारणभावावच्छेदकतायाः कुत्रापि जातिसिद्धिर्न स्यादिति चेन्न स्यादेव परमार्थतः प्रत्यक्षसिद्धजात्या हि यत्रान्वयव्यतिरेकाभ्यां हेतुहेतुमद्भावबुद्धिस्तत्रैव कार्यकारणयोरतीन्द्रिययोरपि तज्जातिमत्त्वोपगमादित्याहुः। वस्तुतस्तृणादिषु वह्नेः कारणतानवच्छिन्नैव न हि स्वरूपसम्बन्धविशेषोऽतिरिक्तपदार्थरूपा वा कारणता किञ्चिद्धर्मावच्छिन्नैवेति व्याप्तिरस्ति प्रमाणाभावात्। एतेन किञ्चित्कार्यत्वमपि विवेचितम्। अथैवं तन्तुत्वपटत्वादेरपि तथात्वं न स्यादिति चेन्न। तन्तुत्वेन तन्तुः पटकारणं पटत्वेन च पटस्तन्तुकार्यमिति प्रत्ययस्तत्र कार्यतावच्छेदकत्वासिद्धेः। इहापि तथा प्रतीतिरस्तीति चेन्न शक्तिविशेषेण तृणं वह्निहेतुरिति प्रतीतेरसिद्धेः शक्तेरतीन्द्रियत्वोपगमात्। अस्ति तथा शाब्दी बुद्धिरिति चेत् तत्किं तत्रापि परमार्थतो वस्तुसिद्धिः। अथैवं वह्नौ तृणादिजन्यतापि निरवच्छिन्नैव स्यादिति चेत् स्यादेव यदि न स्याद्वह्नित्वेन वह्निः तृणादिजन्य इत्यत्राबाधितानुभवविरोध इति ब्रूमः। यदि च तृणत्वादिना तृणादिकं वह्निहेतुरित्यादिकोऽपि प्रामाणिकप्रत्ययस्तदा आस्तां तृणत्वाद्यवच्छिन्नकारणताप्रतियोगिकं निरवच्छिन्नमपि वह्नौ कार्यतान्तरमवच्छिद्यतां वा वह्नित्वावच्छिन्नकार्यताप्रतियोगिककारणत्वमेव तृणत्वादिना प्रमाणसिद्धस्यातिप्रसक्तधर्मेण कार्यत्वस्यादोषत्वात्। यदि तृणत्वावच्छिन्नकारणताप्रतियोगिककार्यता न

वह्नित्वेनेति नानुभवः । एतेन लौकिकालौकिकनानेन्द्रियसन्निकर्षादेः प्रत्यक्षं प्रति बहुविधवह्निव्याप्तिविषयकपरामर्शस्य वह्न्यनुमितिं प्रति विविधपदवृत्तिज्ञानजन्यपदार्थोपस्थितेः शाब्दं प्रति तत्तदनन्तानामुद्बोधकानां स्मृतिं प्रति प्रवृत्त्यादिकं प्रति च स्वर्गादिनानाविधेष्टसाधनताज्ञानादीनां कारणत्वं यथायथं व्याख्यातम् । तच्चापि निरवच्छिन्नकार्यकारणभावोपगमात् । अथैवमनन्तपरामर्शपदाध्याहारयोः कल्पनायां गौरवात् अयं वह्निव्याप्यधूमो धूमवान् पर्वत इत्यादिज्ञानद्वयादप्यनुमितेरर्थाध्याहारादपि च शाब्दबोधोत्पत्तिमुरीकुर्वन्तो(१) मीमांसका एव विजयेरन्निति विजयेरन्नेव को नाम नाभ्युपैति । अथैवं ज्ञानद्वयादित एव प्रवृत्त्यादेरुपपत्तेरन्यथाख्यातिर्न सिद्धेदिति चेन्न सत्यस्येवासत्यस्यापि विशिष्टज्ञानस्यानुभवसिद्धत्वेन दुर्वारत्वात् । कारणबाधस्य च निरस्तत्वात् । अत एव विनापि व्याप्त्यादिज्ञानं घटमानयेत्यादिशब्दश्रवणानन्तरमाकाङ्क्षादिज्ञानसचिवपदार्थोपस्थितेरेव घटमानयेत्याद्याकारानुमितिरेवोत्पद्यत इति अनुमान एव शब्दान्तर्भाव इति नव्यवैशेषिकाणां शब्दप्रामाण्यखण्डने भावः तत्खण्डनं पुनरेवमर्थं शब्दाच्छृणोमि नानुमिनोमि न साक्षात्करोमीति प्रतीतेरेव नान्यथा शृणोतेश्च शाब्दत्वं श्रावणत्वं चोभयमपि सामान्यं शक्यतावच्छेदकं शब्दं शृणोमीति प्रतीतिवद्घटपदाद्घटं शृणोमीति प्रतीतेरपि दर्शनात् । अत एवात्मा श्रोतव्य इति शाब्दत्वावलम्बनश्रौतकर्मोपीत्यवधेयम् ।

(१) मल्लीकुर्वन्तो—पा॰ २ पु॰ ।

एके तु वह्नित्वावच्छिन्नकार्यताप्रतियोगिककारणतावच्छेदकवत् तृणादिकं तृणत्वाद्यवच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकवान् वह्निरित्यादिकं प्रत्ययं कल्पयन्तस्तृणादिषु सङ्कीर्णां जातिं वह्निवृत्तीनि च वैजात्यानि[1] कल्पयन्ति । केचित्तु कार्यता कारणता च सर्वत्र निरवच्छिन्नैव तन्तुः पटकारणमित्यादिको हि लोकानामनुभवो न तु तन्तुत्वादिनापि द्रव्यत्वेन न तन्तोः पटकारत्वं किं तु तन्तुत्वेनेत्यादिकाः प्रतीतयस्तु केवलतान्त्रिकाणामेवेत्याहुः । केन रूपेणेति । न हि तेषां शुद्धदशरथत्वादिनोपस्थितिः संभाव्येतापि तथाऽननुगमात् नापि प्रमेयत्वादिना दशरथत्वादिप्रकारकोपस्थितिः ततः प्रमेयवानित्याकारकशाब्दबोधस्यैव भाव्यत्वादिति भावः । विभावनीयमिति । शुद्धदशरथत्वादिनैव तदुपस्थितिरितरथा तथा शाब्दबोधानुपपत्तेः । न च कारणबाधः प्रमेयवानित्याकारकसंस्कारादेव प्रमेयत्वांशे उद्बोधकरहितात् तथा स्मरणसम्भवात् । तत्प्रकारकस्मृतिं प्रति तत्प्रकारकानुभवत्वेनैव हेतुत्वं न तु निरवच्छिन्नतत्प्रकारताकस्मृतिं प्रति तादृशानुभवत्वादिनापि गौरवात् मानाभावाच्च । अपि च प्रमेयमभाववदित्याकारकज्ञानात्संसर्गविधया शुद्धदशरथत्वादिस्वरूपप्रतियोगित्वलक्षणसम्बन्धविषयकज्ञानलक्षणाप्रत्यासत्तेः शुद्धदशरथत्वादिप्रकारको मानसानुभवोऽपि सुलभः । एतेनान्वयव्यतिरेकाभ्यां शुद्धतत्प्रकारकस्मृतितादृशानुभवत्वादिना हेतुत्वेऽपि न क्षतिः । वस्तुतः तेषां शुद्ध-

(१) वह्निनिष्ठवैजात्यानि—पा॰ २ ।

दशरथत्वादिना शाब्दधीरेव न भवति । परं तु दशरथादिपदवाच्यत्वादिनैव शाब्दबोधः । एवं च लक्षणया दशरथादिपदवाच्यत्वप्रकारकं वाच्यत्वसम्बन्धेन दशरथादिपदप्रकारकं वा स्मरणमेवापेक्षितं तच्च दशरथादिपदवाच्यत्ववति दशरथादिपदशक्यसम्बन्धप्रकारकाद्वाच्यत्वसंसर्गेण दशरथादिपदवृत्तिशक्यसम्बन्धसंसर्गेण दशरथादिपदप्रकारकाद्वा मानसबोधादेवोत्पत्स्यत इति युक्तमुत्पश्यामः ॥

७५।१। न गुण इति । न गुणपदार्थ इत्यर्थः । गुणादिष्विति गुणपदार्थतया उभयाभ्युपेतेष्वित्यादि । तद्वत्तेति । एकरूपमित्याद्याकारकसंख्यावत्ताप्रत्ययादित्यर्थः । एकेति । एकस्मिन्नर्थे द्वयोः समवाय इत्यर्थः । यत्र संख्यायाः समवायस्तत्र गुणादेरपि समवायोऽस्तीति तेन सम्बन्धेन प्रतीतेः प्रमात्वमेवेति भावः । ननु महारजनतदुपरक्तपटादौ लौहित्यप्रतीतीनां समवायसमवायिसंयोगात्मकविलक्षणसम्बन्धविषयकत्वेऽपि अविलक्षणप्रकारकत्वादविलक्षणत्वं तथेहापि भविष्यतीत्यत आह । घटत्वादौ चेति सम्प्रदायः । वस्तुतस्त्वविलक्षणाया इत्यस्याविलक्षणसम्बन्धविषयिण्या इत्यर्थः । तच्चं चानुभवसिद्धमिति भावः । महारजनतदुपरक्तपटादौ च विलक्षणसम्बन्धविषयकत्वमनुभवसिद्धम् यच्च चाविलक्षणसम्बन्धविषयकत्वानुभवस्तत्र पटादावपि लौहित्यादिप्रतीतेः । समवायसम्बन्धविषयकत्वमिष्यत एव परं तु बाधकबलात्तस्या भ्रमत्वं कल्प्यते । न चैवं तत्राबाधितप्रमाण्यानुभवो न स्यात् परम्परासम्बन्धविषयीकरणेऽपि तदुपपत्तेरिति

दक् । द्वित्वादीति । द्वयं घटत्वमित्यादीत्यर्थः । ननु समवायवदेकार्थसमवायेनापि नैकस्मिन् द्वित्वादिकं पर्याप्नोतीति न तथा प्रतीतिरित्यत आह । रूपत्वादौ चेति । तत्सम्भव इति एकार्थसमवायसम्भव इत्यर्थः । यत्तु तत्राप्येकार्थसमवेतसमवायात् संख्याप्रत्यय इति तन्न उक्तोत्तरत्वात् ॥

७६।१। गन्धादिमत्तेति । अथ गन्धादिमत्ता गन्धादिसमवायो गन्धादिकं वा प्रष्टव्यः प्रथमं चेन्न तथा प्रतीतेस्तद्धीष्टत्वात् चरमं चेत् न तत्र गन्धादिसमवायसत्त्वेऽपि गन्धादेरभावादिति । अथ तदीयसम्बन्धवत्त्वं तद्वत्त्वनियतमतो गन्धादिमत्ताप्रतीतेरापत्तिरिति चेन्न गगनीयसंयोगे व्यभिचारात् । वृत्तिनियामकत्वविशेषणान्नैवमिति चेन्न घटवृत्तिता नियामककपालसंयोगवत् कपालस्य स्वाभाववत्त्वेन व्यभिचारात् । उक्तसंयोगस्यापि च घटादि[1]वृत्तिनियामकत्वात् अप्रयोजकत्वाच्च यच्च तद्वृत्तितानियामकः संसर्गस्तच्च तद्वत्तानियम इति चेदनुमन्यमेतत् । न चैतावता आयाति तोयादेर्गन्धादिमत्ता हेतोरसिद्धेः सन्नपि पयसि गन्धसमवायः कथं तद्वृत्तिनियामक इति चेदनुभवं पृच्छ यद्सौ समवायेन पयसि गन्धो नास्तीत्याकारको जायतेऽनुभूयते चेति चेत् । अत्राहुः जलेस्नेहस्य समवायो न गन्धस्येत्यादिप्रतीतेरेव समवायस्य नानात्वं तत्रैव च ग्रन्थाकृतस्तात्पर्यमिति । ननु समवायस्य नानात्वे कथमनुगता समवेताकारधीर्गन्धादिष्वित्यत आह । समवायत्वमिति । तथा च तदनुगमादनुगता-

(१) घटादि—पा॰ २ पु॰ । एवं पूर्वस्मिन्नपि ।

धीरीति भावः । अत्र चानुगतमतेरनुगतविषयनियम्यतया समवायस्यैकत्वे सिद्धे जले न गन्धसमवाय इत्यादिप्रतीतेर्विशिष्टाभावो विषय इति वदन्ति ॥

७६।४। वैशिष्ट्यमपीति । भूतलादावभावसम्बन्ध इत्यर्थः । निमित्तेति । संसर्गविधया विषयतयेत्यर्थः । तथेति अभाववत्ताप्रत्ययविषयेत्यर्थः । तत्रापि रूपादिमत्ताप्रतीतावपि । सुवचत्वादिति । अथास्तु समवायस्याप्युच्छेद इति चेन्न विलक्षणस्वरूपसम्बन्धांशेऽविलक्षणानां रूपादिघटाभावादिमत्त्वप्रत्ययानामनुपपत्तेः । अयं घट इत्यादेरिवात्रास्य समवाय इति प्रतीतेरानुभाविकत्वाच्च ॥

७८।१। ज्ञानादीत्यादिपदादिच्छादिपरिग्रहः । विषयतादिपदाद्विषयित्वप्रतियोगित्वानुयोगित्वावधित्वावधिमत्त्वाधारत्वाधेयत्वदिक्कालनिरूपितविशेषणत्वविशेष्यत्वावच्छेदकत्वावच्छेद्यत्वादयः परिगृहीताः व्याख्याता इति । पटादौ ज्ञानादिमत्ताबुद्धिनिमित्ततया तेषां सिद्धेरिति भावः । परे तु सम्बन्धांशेऽविलक्षणरूपादिमत्ताप्रत्ययमात्रस्य समवाय इत्यादिकं प्रत्ययमुपलभन्तः समवायिविशेषणतादिकं सकलमेवातिरिक्ततया मन्यन्ते । केचित्तु कार्यकारणभावावच्छेदकसम्बन्धविधया समवायिविशेषणत्वविषयित्वादिकमतिरिक्तं सिद्ध्यति अन्यथा सम्बन्धाननुगमादननुगतकार्यकारणभावापत्तेः । अत एव ग्रन्थकृतापि निमित्ततयेत्युक्तम् । तदर्थश्च हेतुतयेति । यथाश्रुत एवेत्यर्थः। न्यायचतुर्थाध्याये शून्यतोपादानकत्वनिराकरणप्रकरणे पूर्वपक्षे उक्तम् ॥

७८।२। नानुपमृद्येति । बीजादिकं महापटादि चानुपमृद्याङ्कुरादेः खण्डपटादेश्च प्रादुर्भावस्य जन्मनोऽभावादित्यर्थः । एतावता जनकत्वं सिध्यद्स्तु इति बाधके उपादानकारणत्वमेव सिध्यतीति तेषामभिमानः । इदमुपलक्षणं तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तेरित्यपि न्यायचतुर्थाध्यायसूत्रं तेषां रागद्वेषमोहानां रागमोहयोर्द्वेषमोहयोर्वा मध्ये मोहः पापीयान् बलवद्द्वेषविषयः अमूढस्य रागद्वेषानुत्पत्तेरिति तदर्थः । अस्मन्मते कलञ्जभक्षणं पापाजनकत्वाभाववदित्येवार्थः । प्रकृत्यर्थे विध्यर्थस्य पापजनकत्वस्य नञाऽभावबोधनादतो गुरूणामित्युक्तम् । विषयः कारणम् तन्मते कलञ्जभक्षणाभावेन निषेधापूर्वजननात् । कार्यं कृतिसाध्यं तच्च तन्मते विध्यर्थः । एतादृश इति । प्रकृत्यर्थान्वितनञर्थविभक्त्यर्थयोरन्वय इत्यर्थः । स्थलविशेषे तादृशप्रयोगस्थले ।

७१।२। पदार्थान्तरमिति । न चान्यथासिद्धनिरूपकनियतपूर्ववर्तितावच्छेदकधर्मवत्त्वेनैव तथा व्यवहारोपपत्तेरतिरिक्तकारणत्वे मानाभावः । अन्यथासिद्धेर्दुर्वचत्वान् नियमस्य चाननुगतत्वेनानुगतप्रत्ययानुपपत्तेश्च । मम तु कारणत्वत्वेनाखण्डोपाधिना तथा प्रत्ययात् । एतेनान्यथासिद्धानिरूपकधर्मावच्छिन्नस्य नियतोत्तरवर्तितावच्छेदकधर्मत्वं कार्यत्वमित्यपास्तम् । कार्यभेदादिति । नात एककार्यकारणस्य सकलकार्यकारणत्वप्रसङ्गः कार्यभेदश्च कार्यतावच्छेदकावच्छिन्नभेदः कार्यतावच्छेदकभेद इति फलितार्थः । तेन घटव्यक्तीनां भेदेऽपि घटत्वस्य कार्यतावच्छेदकस्यैकत्वात् तासां कारणत्वमेकमेवेति मन्तव्यम् । अव-

च्छेदकभेदादिति। नातो दण्डत्वादिना घटकारणस्य कपाल-त्वादीनापि तत्कारणत्वमिति भावः । शक्येति। नातः कारणादिपदनानार्थत्वमिति भावः । क्वचिद्दण्डादावन्वयव्यतिरेकग्रह इत्यस्य नियमत इत्यादिः । नातः सति व्यभिचारग्रहे कुचचिदन्वयव्यतिरेकग्रहेऽपि कारणत्वग्रहः । वस्तुतो व्यभिचारस्य कारणत्वाद्यभावव्याप्यादितया ग्रह एव विरोधी तद्ग्रहे व्यभिचारग्रहेऽपि कारणताग्रहस्येष्टत्वादिति यथाश्रुतमेव सम्यक्। न चैवं कारणताप्रत्यक्षं प्रत्यन्वयव्यतिरेकग्रहस्य हेतुत्वे मानाभावः। सत्यपि दण्डेन्द्रियसन्निकर्षे तज्ज्ञाने च विनान्वयव्यतिरेकग्रहं कारणत्वप्रत्यक्षानुदयात् । यदि च तत्रापि कारणत्वं गृह्यत एव न तु निश्चीयते संशयसामग्रीसत्त्वादिति विभाव्यते तदोक्तरीत्या प्रतिबन्धकस्य व्यभिचारग्रहस्य निवारकतया तदुपयोग इति तथोक्तम्। अन्वयः इन्द्रियसन्निकर्षस्य व्यतिरेकः कारणत्वाभावव्याप्यादितया ग्रहस्य ग्रह इति घटसत्त्वे ग्रहो विशेषणस्येत्येवमेवार्थ इति दिक् । क्वचित् गगनादौ। एतेनेति । कार्यत्वमपि पदार्थान्तरं तच्च कारणतावच्छेदकभेदात् स्वावच्छेदकभेदाच्च भिद्यते कार्यत्वत्वेनाखण्डोपाधिनाऽनुगतं च। तत्कार्यादिपदशक्यतावच्छेदकग्राहकं चेत्यादीति भावः । कारणेति। अस्येदं कारणमिति प्रतीतिसिद्धस्य कारणताप्रतियोगिकत्वस्यावश्याभ्युपेयत्वात् । तेनैव कार्यव्यवहारोपपत्तौ नातिरिक्तं कल्प्यत इति भावः। कार्यत्वेति। कार्यत्वमेवातिरिक्तम् पदार्थान्तरम्। कारणत्वं तु कार्यताप्रतियोगिकत्वमेव। अस्येदं कार्यमिति प्रतीतिसिद्धतयाऽवश्याभ्युपेतेन कार्यताप्रतियोगिकत्वेनैव

कारणत्वाव्यवहारसम्भवादिति भावः । तस्मादिति । विनिगमकाभावात् कारणत्वं कार्यत्वप्रतियोगित्वादितः कार्यत्वं च कारणत्वप्रतियोगित्वादितो भिन्नमित्यर्थः । ... बोध्यम् । यागादौ स्वर्गादिनिष्ठकारणताया आधाराधेयभावसम्बन्धेन ज्ञानस्य स्वर्गादिनिष्ठकार्यतायाः प्रतियोगित्वसंसर्गेण ज्ञानस्य च द्वयोरेव विनिगमकाभावादेकप्रतिमस्त्वेन प्रवृत्तौ चैतुत्वमिति । परं तु यद्वच्छिन्नं प्रति अन्यथासिद्धनिरूपको नियतपूर्ववर्तितावच्छेदकस्य यो धर्मस्तद्वत्त्वधर्मवत्त्वे एव परस्परनिरूपिते तेन रूपेण कार्यत्वकारणत्वे तद्धर्मावच्छिन्नं प्रति नियतपूर्ववर्तितावच्छेदकत्वेन येन तादृशं प्रति कारणत्वं न व्यवह्रियते स धर्मस्तादृशं प्रत्यन्यथासिद्धिनिरूपकस्तत्तद्भेदसमूहस्तावदन्यतमत्वावच्छिन्नप्रतियोगिताक एक एव भेदो वा प्रतियोग्यविशेषितः कारणतायां निवेशनीय इति नान्यथासिद्धिनिरूपकेण कारणत्वभ्रमानुपपत्तिः । अनुगतव्यवहारस्य व्याप्त्यादिव्यवहारवच्छब्दमाचानुगमादेव । न चेदेवं व्याप्यत्वादेरपि पदार्थान्तरतापत्तिः । अत एव व्यभिचारग्रहेण नियमतः कारणताधीप्रतिबन्धः अत एव च कार्यत्वकारणत्वयोरवच्छिन्नत्वनियमप्रवादोऽपि साधु सङ्गच्छते । अथ तद्धर्मावच्छिन्ननियतपूर्ववर्तितावच्छेदकत्वम् अव्यवहितपूर्वत्वसम्बन्धेन तद्धर्मावच्छिन्नवान् यः समयस्तत्र दैशिकविशेषणतया वर्तमानस्याभावस्य कालिकविशेषणता स्वव्यापारान्यतरसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वं तादृशान्यतरसम्बन्धेन स्वावच्छिन्नानधिकरणेन तत्र वर्त्तमानस्य प्रतियोगिता-

वच्छेदको यो यो धर्मस्तदन्यत्वकूटवत्त्वं वा तन्त्वादिमत्यपि समये तन्त्वाद्यनधिकरणदेशावच्छेदेन तन्तुत्याद्यवच्छिन्नाभावसत्त्वाद-व्यवहितपूर्वत्वसम्बन्धेन तद्धर्मावच्छिन्नवान्यावान्समयो यद्धर्मा-वच्छिन्नवांस्तत्त्वं वा अन्योन्याभावस्याव्याप्यवृत्तित्वात्। एवं च गतघटत्वादिना कार्यत्वेन घटत्वावच्छिन्नाव्यवहितपूर्वत्वासिद्धेः न हि घटप्रागभावाधिकरणसमयप्रागभावानधिकरणघटप्रा-गभावाधिकरणसमयत्वलक्षणं घटाव्यवहितपूर्वत्वं सम्भाव्यतापि सर्वस्यैव समयस्य यत्किञ्चिद्घटप्रागभावाधिकरणसमयप्रागभा-वाधिकरणतया तदन्यत्वाभावात् तद्धर्माश्रययत्किञ्चिदव्य-वहितपूर्वत्वसंवलितस्य नियमो नोपादेयः। द्रव्यत्वजन्यद्रव्य-त्वावच्छिन्नं प्रत्यपि कपालत्वादिना हेतुतापत्तेः नियमप्रवेशा-नुपपत्तेश्च तद्धर्माश्रयाव्यवहितपूर्ववर्तित्वस्यैव वक्तुमुचितत्वादिति चेन्न तद्धर्माश्रयस्य यावतः प्रत्येकमव्यवहितपूर्वः समयो दर्शि-तान्यतरः तत्सम्बन्धेन यद्धर्मावच्छिन्नं वा तद्धर्मावच्छिन्ननियं-तपूर्ववर्तितावच्छेदकत्वात्। अत एव कार्यमात्रवृत्तिधर्मस्यैव का-र्यतावच्छेदकत्वमिति प्राचीनगाथापि सङ्गच्छते। तद्धर्माश्रयस्य यावान् प्रागभावस्तत्प्रत्येकं तत्तदधिकरणसमयप्रागभावानधिक-रणं तदधिकरणसमय इत्यादेरुक्तत्वान्नित्यवृत्तिरपि धर्मोऽव-च्छेदको जन्यताया इत्यपि वदन्ति। वस्तुतस्तु तद्धर्माश्रयीभूत-यत्किञ्चिद्वस्त्वव्यवहितपूर्वसमयान्यत्वं यद्धर्मावच्छिन्नत्वनिष्ठा-न्योन्याभावप्रतियोगितानवच्छेदकं तदन्यो धर्म एव तद्धर्मा-वच्छिन्नं प्रति नियतपूर्ववर्तितावच्छेदकस्तथा च नित्यानित्य-

वृत्तिरपि धर्मो जन्यताया भवेत्येवावच्छेदक इति युक्तमुत्पश्याम: । एवं यथा यथमेकार्थसमवायादीनां तादात्म्यादिना तादात्म्यादीनां च सम्बन्धेन दैशिकनियमोऽपि प्रायशः कारणतामधिशेत इत्यलमतिविस्तरेण ॥

प्राञ्चः कथञ्चिदपि सञ्चरणे समर्था
नार्थान् दधाति यदि दीधितिकृद्विवेकः ।
श्रीसार्वभौमपरिकल्पितमर्थतत्त्वं
तत्त्वेन तर्हि सुधियः परिशीलयन्तु ॥

इति श्रीरामभद्रसार्वभौमकृतः पदार्थतत्त्वविवेचन-
प्रकाशः समाप्तः ॥

